॥ २८१ ॥ सृजेः कश्च ॥ २. १. २८१ ॥

सृजेः कनिप्प्रत्ययः, कश्चान्तादेशो भवति। स्रक्वणी आस्योपान्तौ ॥

॥ २८२ ॥ ध्याप्योः संप्रसारणं च ॥ २. १. २८२ ॥

"ध्यै" "प्यै" इत्येतयोः कनिप्प्रत्ययः प्रसारणं च भवति। धीवा मनीषी ॥ पीवा पीनः ॥

॥ २८३ ॥ अतेर्धश्च ॥ २. १. २८३ ॥

अतेः कनिप्प्रत्ययो धश्चान्तादेशो भवति। अध्वा मार्गः ॥

॥ २८४ ॥ मनिन् ॥ २. १. २८४ ॥

सर्वधातुभ्यो बहुलं मनिन्प्रत्ययो भवति। कर्म व्यापारः ॥ चर्म अजिनम् ॥ मर्म शरीरदेशः ॥ वर्म सन्नाहः ॥ शर्म सुखम् इत्यादि ॥

॥ २८५ ॥ व्योमन्रोमन्लोमन्क्लोमन्हेमन्वेमन्लामन्-ललामन्नात्मन्यक्ष्मन्पक्ष्मन्नूष्मन्वर्ष्मन्सीमन्ब्रह्मन्निति ॥ २. १. २८५ ॥

व्योमादयो मनिन्प्रत्ययान्ता निपात्यन्ते। व्ययतीति व्योम आकाशम् ॥ रोहतीति रोम तनूरुहम् ॥ तस्यैव लत्वेन लोम तदेव ॥ क्लाम्यतीति क्लोम शरीरान्तरवयवः ॥ जहाति जिहीते वा तदिति हेम हिरण्यम् ॥ वयन्त्यनेनेति वेम तन्तुवायोपकरणम् ॥ लान्ति ललाम भूषणम् ॥ अततीति आत्मा क्षेत्रज्ञः ॥ पातयतीति पाप्मा अधर्मः ॥ यस्यत्यनेनेति यक्ष्मा रोगः ॥ पच्यते तदिति पक्ष्मा अक्ष्यादिरोम ॥ उषतीति ऊष्मा अनाविर्भूतरूपं तेजः ॥ वर्धतेऽसौ वर्ष्म शरीरम् ॥ स्यसतीति सीमा आघाटः ॥ बृंहतीति ब्रह्म आत्मतत्त्वम्। इति करणात् रुक्मतोक्मशुष्मादयो भवन्ति ॥

॥ २८६ ॥ गमेरिनिः ॥ २. १. २८६ ॥

गमेरिनिप्रत्ययो भवति। गमिष्यतीति गमी पथिकादिः ॥

॥ २८७ ॥ आङि च णित् ॥ २. १. २८७ ॥

गमेः केवलात् आङि चोपपदे इनिप्रत्ययो णिद्भवति। गामी प्रस्थितादिः ॥ आगामी प्रोषितादिः ॥

॥ २८८ ॥ भुवश्च ॥ २. १. २८८ ॥

भुवश्च इनिप्रत्ययो णिद्भवति। भावी कर्मविपाकादिः ॥

॥ २८९ ॥ प्रे स्थश्च ॥ २. १. २८९ ॥

तिष्ठतेः धातोः प्र उपपदे इनिप्रत्ययो भवति। प्रस्थादिः पथिकादिः ॥

॥ २९० ॥ यातेः प्रतौ च ॥ २. १. २९० ॥

यातेः धातोः चकारात् प्रेचोपपदे इनिप्रत्ययो णिद्भवति। प्रतियायी प्रयायी ॥

॥ २९१ ॥ बुधेश्च ॥ २. १. २९१ ॥

बुधश्च प्रतौ प्रे चोपपदे इनिप्रत्ययो भवति। प्रतिबोधी प्रबोधी बोद्धादि ॥

॥ २९२ ॥ परमे स्थः कित् ॥ २. १. २९२ ॥

तिष्ठनेः परमे उमपदे इनिप्रत्ययः किद्भवति। परमेष्ठी ब्रह्मा ॥

॥ २९३ ॥ मन्थाः ॥ २. १. २९३ ॥

मथ्नातेरिनिप्रत्ययो भवति, किद्वत्। मन्थाः मन्थानौ। क्षुब्धा ॥

॥ २९४ ॥ पतेः थश्च ॥ २. १. २९४ ॥

पतेरिनिप्रत्ययः थश्चान्तादेशो भवति। पन्थाः पन्थानौ। मार्गः ॥

॥ २९५ ॥ अर्तेर्भुक्षिनक् ॥ २. १. २९५ ॥

अर्तेर्धातोः भुक्षिनक्प्रत्ययो भवति। ऋभुक्षाः ऋभुक्षाणौ। इन्द्रः॥

॥ २९६ ॥ हृजनिभ्यामिमनिच् ॥ २. १. २९६ ॥

आभ्यामिमनिच्प्रत्ययो भवति । हरिमा पाप्मविशेषः ॥ जनिमा धर्मविशेषः ॥

॥ २९७ ॥ भृवृस्तृसूभ्य ईमनिच् ॥ २. १. २९७ ॥

एभ्य ईमनिच्प्रत्ययो भवति । भरीमा क्षमी ॥ वरीमा तपस्वी ॥ स्तरीमा प्रावारः ॥ सवीमा प्रसूतिः ॥

॥ २९८ ॥ आपः क्विन् ह्रस्वश्च ॥ २. १. २९८ ॥

आप्नोतेः क्विन्प्रत्ययो ह्रस्वश्च भवति । आपः पानीयम् ॥

॥ २९९ ॥ ककुप्त्रिष्टुबनुष्टुभः ॥ २. १. २९९ ॥

ककुभादयः क्विन्प्रत्ययान्ता निपात्यन्ते । कं वायुं ब्रह्म वा स्तभ्नातीति ककुभः दिशः ॥ त्रीन् लोकान् स्तभ्नातीति त्रिष्टुप् । ................ [अश्नुते] पर्याप्नोतीति अनुष्टुप् छन्दः ॥

॥ ३०० ॥ इणो दमिक् ॥ २. १. ३०० ॥

एतेः दमिक्प्रत्ययो भवति । इदम् । अनेन सर्वनाम्ना प्रत्यक्षमपदिश्यते ॥

॥ ३०१ ॥ कौतेर्डिमिः ॥ २. १. ३०१ ॥

कौतेः डिमिप्रत्ययो भवति । किम् । अनेन सर्वनाम्ना विज्ञातो वस्तुविशेषः प्रश्नेनुयुज्यते ॥

॥ ३०२ ॥ अवतेर्मिः ॥ २. १. ३०२ ॥

अवतेः मिप्रत्ययो भवति । ओम् ब्रह्म ॥

॥ ३०३ ॥ गॄपॄदुर्वीधुर्वीभ्यः क्विप् ॥ २. १. ३०३ ॥

गिरत्यादिभ्यः क्विप्प्रत्ययो भवति । गीः वाक् ॥ पूः नारी [पुरी] ॥ दूः देहान्तरवयवः ॥ धूः शकटम् ॥

॥ ३०४ ॥ वाद्वारौ ॥ २. १. ३०४ ॥

वार् द्वार् इत्येतौ शब्दौ क्विबन्तौ निपात्येते । वृणोतीति वाः पनीयम् । वृण्वन्ति······· [मार्गमिति] द्वाः ॥

॥ ३०५ ॥ चतेरुरन् ॥ २. १. ३०५ ॥

चतेरुरन्प्रत्ययो भवति । चत्वारः सङ्ख्या ॥

॥ ३०६ ॥ दिवेर्डिविः ॥ २. १. ३१८९ ॥

दिवेः डिविप्रत्ययो भवति । द्यौः स्वर्गः ॥ । प्रस्थ पथि

॥ ३०७ ॥ विशः क्विप् ॥ २. १. ३०७ ॥

विशः क्विप्प्रत्ययो भवति । विट् वैश्यः ॥

॥ ३०८ ॥ विपाशेश्च ॥ २. १. ३०८ ॥

विपाशेश्च क्विप्प्रत्ययो भवति । विपाट् नदी ॥

॥ ३०९ ॥ सहेः षष् च ॥ २. १. ३०९ ॥

सहेः क्विप्प्रत्ययो भवति; ष चास्यागमो भवति । षट् सङ्ख्या ॥

॥ ३१० ॥ सजुषाशिषौ ॥ २. १. ३१० ॥

सजुष् आशिष् इत्येतौ निपात्येते । सह जुषन्तेऽस्यामिति सजूः संप्रीतिः ॥ आ····[शास्यत इति] आशीः इष्टार्थप्रार्थनम् ॥

॥ ३११ ॥ अर्चिरुचिशुचिहुसृपिछदिच्छर्दिभ्य इसिः ॥ २. १. ३११ ॥

एभ्य इसिप्रत्ययो भवति । अर्चिः दीप्तिः ॥ रोचिः तेजः ॥ शोचिः तदेव ॥ हविः पुरोडाशादि ॥ सर्पिः घृतम् ॥ छदिः आवरणम् ॥ छर्दिः वमनम् ॥

॥ ३१२ ॥ बृंहेर्नलोपश्च ॥ २. १. ३१२ ॥

बृंहेरिसिप्रत्ययो नलोपश्च भवति । बर्हिः शिखी ॥

॥ ३१३ ॥ द्युतेर्निदादेश्च जः ॥ २. १. ३१३ ॥

द्युतेरिसिप्रत्ययो निदादेश्च जकारादेशो भवति । ज्योतिः प्रकाशः ॥

॥ ३१४ ॥ सहो घ च ॥ २. १. ३१४ ॥

सहेरिसिप्रत्ययः घश्चान्तादेशो भवति । सिधिः सुखम् ॥

॥ ३१५ ॥ जनेरुसिः ॥ २. १. ३१५ ॥

जनेरुसिप्रत्ययो भवति । जनुः जन्म ॥

॥ ३१६ ॥ अर्तिपॄवपियजिधनिभ्यो नित् ॥ २. १. ३१६ ॥

अर्त्यादिभ्य उसिप्रत्ययो निद्भवति । अरुः क्षतम् ॥ परुः पर्व ॥ वपुः शरीरम् ॥ यजुः अच्छन्दा श्रुतिः ॥ धनुः चापम् ॥

॥ ३१७ ॥ इणो णित् ॥ २. १. ३१७ ॥

इण उसिप्रत्ययो णिद्भवति । आयुः जीवितम् ॥

॥ ३१८ ॥ चक्षेरसिक् च ॥ २. १. ३१८ ॥

चक्षेरसिक्प्रत्ययः, चकारादुसिश्च भवति । संचक्षा ऋत्विक् ॥ नृचक्षा राक्षसः ॥ चक्षः ख्यातिः । चक्षुः नयनम् ॥

॥ ३१९ ॥ पातेर्डुसुन् ॥ २. १. ३१९ ॥

पातेर्डुसुन्प्रत्ययो भवति । पुमान् पुरुषः । उकार उगित्कार्यार्थः ॥

॥ ३२० ॥ यमिदमिभ्यां डोस् ॥ २. १. ३२० ॥

आभ्यां डोस्प्रत्ययो भवति । योः विषयसुखम् ॥ दोः बाहुः ॥

॥ ३२१ ॥ असुन् ॥ २. १. ३२१ ॥

सर्वधातुभ्यो बहुलमसुन्प्रत्ययो भवति । सरतीति सरः तटाकम् ॥ महतीति महः तेजः ॥ एवं मनुते इति मनः चेतः इत्यादि ॥

॥ ३२२ ॥ पिबतेरिच्च ॥ २. १. ३२२ ॥

पिबतेरसुन्प्रत्ययः इकारश्चान्तादेशो भवति। पीयत इति पयः पानीयम् ॥

॥ ३२३ ॥ यजेः श च ॥ २. १. ३२३ ॥

यजेरसुन्प्रत्ययः शकारश्चान्तादेशो भवति। यशः कीर्तिः ॥

॥ ३२४ ॥ उषिरञ्जिशॄभूभ्यः कित् ॥ २. १. ३२४ ॥

उष्यादिभ्योऽसुन्प्रत्ययः किद्भवति। उषः सन्ध्या ॥ रजः आत्मगुणः ॥ शिरः उत्तमाङ्गम् ॥ भुवः अन्तरिक्षम् ॥

॥ ३२५ ॥ वस्यहिभ्यां णित् ॥ २. १. ३२५ ॥

आभ्यामसुन्प्रत्ययो णिद्भवति। वासः वस्त्रम् ॥ आगः व्यलीकम् ॥

॥ ३२६ ॥ उषेर्जश्च ॥ २. १. ३२६ ॥

उषेरसुन्प्रत्ययः जकारश्चान्तादेशो भवति। ओजः बलम् ॥

॥ ३२७ ॥ वहेः सुट् च ॥ २. १. ३२७ ॥

वहेः असुन्प्रत्ययः सुट्चास्यागमो भवति। वक्षः भुजान्तरम् ॥

॥ ३२८ ॥ स्रुरीभ्यां तुट् च ॥ २. १. ३२८ ॥

आभ्यामसुन्प्रत्ययः, तुट्चास्य भवति। स्रोतः निर्झरः ॥ रेतः शुक्रम् ॥

॥ ३२९ ॥ इणो नुट् च ॥ २. १. ३२९ ॥

एतेरसुन् नुट्चास्य भवति ॥ एतीति एनः पापम् ॥

॥ ३३० ॥ शीङः फट् च ॥ २. १. ३३० ॥

शीङोऽसुन्प्रत्ययः फट्चास्यागमो भवति। शेफः शिश्नम् ॥

॥ ३३१ ॥ छदिरहो नुट् ह्रस्वश्च ॥ २. १. ३३१ ॥

आभ्यामसुन्प्रत्ययः नुट् ह्रस्वश्च भवति। छन्दः गायत्र्यादि॥ रंहः वेगः॥

॥ ३३२ ॥ अमेर्भुक् च ॥ २. १. ३३२ ॥

अमेरसुन्प्रत्ययः भुक् चास्यागमो भवति। अम्भः पानीयम्॥

॥ ३३३ ॥ अर्तेरुच्च ॥ २. १. ३३३ ॥

अर्तेरसुन्प्रत्ययः उकारश्चान्तादेशो भवति। उरः बाहुमध्यम्॥

॥ ३३४ ॥ व्याधौ शुट् च ॥ २. १. ३३४ ॥

अर्तेर्व्याधावभिधेयेऽसुन्प्रत्ययः शुट् चास्यागमो भवति। अर्शांसि गुदादि-किलासम् [ कीलम् ] ॥

॥ ३३५ ॥ उदके नुट् च ॥ २. १. ३३५ ॥

अर्तेरुदकेऽर्थेऽसुन्प्रत्ययः नुट् चास्यागमो भवति। इयर्तीति अर्णः जलम्॥

॥ ३३६ ॥ पातेस्थुट् च ॥ २. १. ३३६ ॥

पातेरुदकेऽर्थेऽसुन्प्रत्ययः थुट् चास्यागमो भवति। पाथः उदकम्॥

॥ ३३७ ॥ बले जुट् च ॥ २. १. ३३७ ॥

पातेर्बलेऽर्थेऽसुन्प्रत्ययः जुट् चास्यागमो भवति। पातीति पाजः बलिः॥

॥ ३३८ ॥ यातेर्दुक् च ॥ २. १. ३३८ ॥

यातेरसुन्प्रत्ययो दुक् चास्यागमो भवति। यादांसि जलजन्तवः॥

॥ ३३९ ॥ नभेश्चित् ॥ २. १. ३३९ ॥

नभेरसुन्प्रत्ययः चिद्भवति। नभः आकाशम्॥

॥ ३४० ॥ इन्धेर्नलोपश्च ॥ २. १. ३४० ॥

इन्धेरसुन्प्रत्ययः नलोपश्च भवति। एधः इन्धनम्॥

॥ ३४१ ॥ आपो ह्रस्वो नुट् च वा ॥ २ १. ३४१ ॥

आप्नोतेरसुन्प्रत्ययो ह्रस्वश्च भवति, नुट् चास्य वा । अपः सत्कर्म ॥ [अप्नः] तदेव ॥

॥ ३४२ ॥ अदेर्नुं धश्च वा ॥ २. १. ३४२ ॥

अदेरसुन्प्रत्ययः नुमागमो धकारश्चान्तादेशो वा भवति । अन्धः अन्नम् ॥ अदः । अनेन सर्वनाम्ना प्रत्यक्षमपि प्रकृष्टमप्रत्यक्षं बुद्धिस्थम-पदिश्यते ॥

॥ ३४३ ॥ इण्विधिभ्यामसिः ॥ २. १. ३४३ ॥

आभ्यामसिप्रत्ययो भवति । अयः लोहः ॥ "विध" इति विधानार्थः सौत्रो धातुः । वेधाः प्रजापतिः ॥

॥ ३४४ ॥ पुरोरेतःपयस्सु दधः कित् ॥ २. १. ३४४ ॥

दधातेः पुरःप्रभृतिषूपपदेषु असिः किद्भवति । पुरोधाः पुरोहितः ॥ रेतोधाः जनकः ॥ पयोधाः पर्जन्यः ॥

॥ ३४५ ॥ रेपस्रेक्णसूधस्विहायसोकस्सुमनस्पुरूरवस्पुरुदंसोने-हसङ्गिरोऽप्सरसः ॥ २. १. ३४५ ॥

रेपःप्रभृतयः शब्दा असिप्रत्ययान्ता निपात्यन्ते । रेपतीति रेपः पापम् ॥ रिणक्तीति रेक्णं धनम् ॥ ऊन्दन्त इति ऊधः आपीनम् ॥ विजहातीति विहायः आकाशम् ॥ उचन्त्यस्मिन्निति ओकः सदनम् ॥ सुष्ठ मानयन्तीति सुमनसः पुष्पाणि ॥ पुरु रौति पुरूरवाः ऐलः ॥ पुरु दंसतीति पुरुदंसाः इन्द्रः ॥ न ईहते अनेहाः कालः ॥ अङ्गतीति अङ्गिराः ऋषिः ॥ अद्भ्यः सरन्ति अप्सराः देवगणिका ॥

॥ ३४६ ॥ वशेः कनसिः ॥ २. १. ३४६ ॥

वशेः कनसिप्रत्ययो भवति । उशना शुक्रः ॥

॥ ३४७ ॥ दमेरुनसिः ॥ २. १. ३४७ ॥

दमेरुनसिप्रत्ययो भवति । दमुनाः अग्निः । केचित् दीर्घं पठन्ति । दमूनाः ॥

॥ ३४८ ॥ चदेरमसिः ॥ २. १. ३४८ ॥

चदिधातोरमसिप्रत्ययो भवति । चन्द्रमाः निशाकरः ॥

॥ ३४९ ॥ अनसि वहेः क्विप् डश्चानसः ॥ २. १. ३४९ ॥

अनस्युपपदे वहेः क्विप्प्रत्ययः डश्चानसोऽन्तादेशो भवति । अनो वहति अनड्वान् सौरभेयः ॥

इति श्रीदण्डनाथनारायणभट्टविरचितायां सरस्वतीकण्ठाभरणस्य वृत्तौ हृदयहारिण्यां द्वितीयस्याध्यायस्य प्रथमः पादः ॥



॥ श्रीः ॥

## ॥ अथ द्वितीयः पादः ॥

### ॥ ३५० ॥ जीवेरातृकन् वृद्धिश्च ॥ २. २. १ ॥

जीवयतेरातृकन्प्रत्ययो वृद्धिश्च भवति । जैवातृकः वैद्यः ॥

### ॥ ३५१ ॥ इण्भीकापाशल्यतिमर्चिनिहाङ्भ्यः कन् ॥ २. २. २ ॥

इणादिभ्यः कन्प्रत्ययो भवति । एकः संख्याविशेषः ॥ भेकः दर्दुरः ॥ काकः वायसः ॥ पाकः बालः ॥ शल्कं वल्कलम् ॥ अत्कः वायुः ॥ मर्कः असुरः ॥ निहाका गोधा ॥

### ॥ ३५२ ॥ युशुघुविधूञां दीर्घश्च ॥ २. २. ३ ॥

युप्रभृतिभ्यः कन्प्रत्ययो दीर्घश्चैषां गुणापवादी भवति । यूका क्षुद्रजन्तुः ॥ शूका हृल्लेखः ॥ घूकः कौशिकः ॥ वीका पक्षिजातिः ॥ धूका पताका ॥

### ॥ ३५३ ॥ कुनुस्तूयिकृदाधारार्चित्रलिकलिभ्यः कः ॥ २. २. ४ ॥

एभ्यः कप्रत्ययो भवति । कोकः चक्रवाकः ॥ तोकम् अपत्यम् ॥ स्तोकम् अल्पम् ॥ ऊकः कुन्दमः ॥ कर्तः कल्कम् ॥ दाकः यजः ॥ धाकः ओदनः ॥ राकः पौर्णमासी ॥ अर्कः सूर्यः ॥ त्रकं त्वक् ॥ कल्कः कषायः ॥

### ॥ ३५४ ॥ कृसृवृविपुषिमुषिमूङ्शुभूभ्यः कित् ॥ २. २. ५ ॥

कृप्रभृतिभ्यः कप्रत्ययः किद्भवति । कृकं शिरोग्रीवम् ॥ सृका आयुधविशेषः ॥ वृकः श्वापदविशेषः ॥ विकः करिपोतः ॥ पुष्कः कासारम् ॥ मुष्कः अण्डम् ॥ मूकः अवाक् ॥ शुकः पक्षी ॥ भूकः कालः ॥

॥ ३५५ ॥ निष्कतुरुष्कोदर्कालर्कशुल्कश्वफल्ककिञ्जल्कोल्कछेककेकादयः ॥ २. २. ६ ॥

निष्कादयः कप्रत्ययान्ता निपात्यन्ते । नासार्धश्चे [?] निष्कं सुवर्णादि ॥ तुरेरुषक् । तुरुष्कः म्लेच्छः ॥ उदरिति निच्च । उदर्कः क्रियाफलम् ॥ अलेररक् च । अलर्कः उन्मत्तकः श्वा ॥ शलेरुच्चोपधायाः । शुल्कं रक्षानिर्वेशः ॥ शुनि फाले ह्रस्वश्च । श्वफल्कः अन्धकविशेषे ॥ किमिञ्जो रश्च लः । किञ्जल्कः पुष्परजः ॥ ज्वलेर्जलोपो वः संप्रसारणं च । उल्का औत्पत्तिकं ज्योतिः ॥ छत्रकायत्योरेत्वं च । छेकः मनीषी ॥ केका मयूरवाक् । आदिग्रहणात् ऋकास्पृकावृकादयो भवन्ति ॥

॥ ३५६ ॥ कृसृभृवृस्तुकुक्षुचरिचटिचणितम्यमिदेविकनिमनिपचिमचिमशिक्षारिकुरिवृतिवल्लिमल्लिसल्ल्यलिभ्यो वुन् ॥ २. २. ७ ॥

कृसृतिभ्यो वुन्प्रत्ययो भवति । करकः भृङ्गारकः । करका वर्षपाषाणः ॥ सरकः मद्यविशेषः । सरका मधुपानवारः ॥ भरकः गोण्यादि ॥ वरकः वाजसनेय····[शाखा] ॥ स्तवकः पुष्पगुच्छ ॥ कवकं अभक्ष्यद्रव्यविशेषः ॥ क्षवकः राजसर्षपम् ॥ चरकः मुनिः ॥ चटकः पक्षी ॥ चणकः मुनिः ॥ तमकः व्याधिः ॥ अमका शैलम् ॥ देवका अप्सराः । देविका नदी ॥ कनकं सुवर्णम् ॥ मेनका अप्सराः ॥ पेचकः हस्तिजघनभागः ॥ मेचकः वर्णः । "मनिपचिवशां नाष्टि" इत्येकारः ॥ मशकः क्षुद्रजन्तुः ॥ क्षारकः बालमुकुलम् ॥ कोरकं प्रौढमुकुलम् ॥ वर्तका वर्तिका वा शकुनः ॥ वल्लकी वीणा ॥ मल्लकः शरावः ॥ सल्लकी वृक्षः ॥ अलका पुरी । अलकः केशविन्यासः ॥

॥ ३५७ ॥ कौ रुरुण्टिरण्टिभ्यः ॥ २. २. ८ ॥

रुप्रभृतिभ्यः कावुपपदे वुन्प्रत्ययो भवति । कुरवकः वृक्षः ॥ कुरण्टकः पर्णगुच्छः ॥ कुरण्टकः स एव ॥

॥ ३५८ ॥ कटेर्नुं च वा ॥ २. २. ९ ॥

कटेर्वुन्प्रत्ययो नुमागमश्च वा भवति । कटकं वलयम् ॥

॥ ३५९ ॥ उदिरुचितिलिपुलिपिटिक्षिपिध्रुसूभ्यः कित् ॥ २. २. १० ॥

उदादिभ्यः वुन्प्रत्ययः किद्भवति । उदकं वारि ॥ रुचकः आभरणविशेषः ॥ तिलकः वृक्षः ॥ पुलकः रोमाञ्चः ॥ पिटकः क्षरस्फोटकः ॥ क्षिपकः आयुधम् ॥ ध्रुवकः आवपनविशेषः । ध्रुवका सैव ॥ [सुवका] ॥

॥ ३६० ॥ कीचकार्भकधमकवधकजहकैरकैडकाश्मकादयः ॥ २. २. ११ ॥

कीचकादयो वुन्प्रत्ययान्ता निपात्यन्ते । कचेरिच्चोपधायाः । कीचकः वेणुविशेषः ॥ अर्तेर्भुक् च । अर्भकः बालः ॥ ध्मो धम च । धमकः कर्मारः ॥ हनो वध च । वधकः हन्ता ॥ हो द्वे च । जहकः कालः ॥ इरेः गुणः । एरका उदकतृणजातिः ॥ ईडेश्च गुणः । एडकः अविजातिः ॥ अशेर्मुट् च । अश्मकाः जनपदः । आदिग्रहणात् उपकलमकचर्मकादयः ॥

॥ ३६१ ॥ खजिबलिपतिभ्य आकः ॥ २. २. १२ ॥

खज्यादिभ्य आकप्रत्ययो भवति । खजाकः मस्था ॥ बलाका पक्षिविशेषः ॥ पाकः तवैजयन्ती ॥

॥ ३६२ ॥ शलिपटिमनिभ्यो नित् ॥ २. २. १३ ॥

एभ्य आकप्रत्ययो निद्भवति । शलाका एषणी ॥ पटाका वैजयन्ती ॥ मनाकः मुनिः ॥

॥ ३६३ ॥ पिनाकपिण्याकश्यामाकपुलाकवार्ताकवृन्ताकज्योन्ताकादयः ॥ २. २. १४ ॥

पिनाकादय आकप्रत्ययान्ता निपात्यन्ते। पिनष्टीति पिनाकः ऐशं धनुः ॥ पणेरत इण्युच्च। पिण्याकः तिलादिखलः ॥ श्यैङो मुट् च। श्यामाकः मुन्यन्नम् ॥ पुलेर्गुणाभावश्च। पुलाकः अर्धस्विन्नविधाविशेषः ॥ वृतेर्वृद्धिः। वार्ताकी शाकविशेषः। तत्फलं वार्ताकम् ॥ मुच्च वृन्ताकी। उच्च बृहती [?]। तत्फलं वृन्ताकम् ॥ ज्यवन्तेऽस्मिन् स्वेदा इति ज्योन्ताकः स्वेदसद्मविशेषः। आदिग्रहणात् गुवाकस्योनाकपराकादयः ॥

## ॥ ३६४ ॥ अलिकलिदलिपुलिवृश्चिस्फटिपिकृषिभ्यः किकन् ॥ २. २. १५ ॥

अल्यादिभ्यः किकन्प्रत्ययो भवति। अलिकं ललाटम् ॥ कलिका कोरकम्। उत्कलिका ऊर्मिः ॥ दलिकं दारु ॥ पुलिकः मणिः ॥ वृश्चिकः विषकी ॥ स्फटिकं मणिः ॥ पिकः कोकिलः ॥ कृषिकः पामरः ॥

## ॥ ३६५ ॥ मुषेर्दीर्घश्च ॥ २. २. १६ ॥

मुषेः किकन्प्रत्ययो दीर्घश्च भवति। मूषिकः आखुः ॥

## ॥ ३६६ ॥ स्यमेर्यण इक् च ॥ २. २. १७ ॥

स्यमेः किकन्प्रत्ययो यण इक् दीर्घश्च। सीमिका उपचि········ विराः ॥

## ॥ ३६७ ॥ पिपीलिकैतिककुशिकहृदिकमक्षिकादयः ॥ २. २. १८ ॥

पिपीलिकादयः किकन्प्रत्ययान्ता निपात्यन्ते। पिलेः द्वे च। पिपीलिका मध्यक्षामा कीटजातिः ॥ एतेः सुट् च। एतिकः मुनिः ॥ कुशेः श च। कुशिकः मुनिः ॥ हृञो दुक् च। हृदिकः यादवः ॥ मषेः सुक् च। मक्षिका क्षुद्रजन्तुः। आदिग्रहणात् छविकाचुरिकाचूलिकादयो भवन्ति ॥

## ॥ ३६८ ॥ ऋच्यलि....[इषिशलि]दूषिकषिहृषिदशिमृडिवलिस्यम्यनिभ्यः कीकन् ॥ २. २. १९ ॥

ऋच्यादिभ्यः कीकन्प्रत्ययो भवति। ऋचीकः ऋषिः॥ अलीकं असत्यम्। व्यलीकं अपराधः॥ इषीका तृणम्॥ शलाका॥ दृषिका अक्षिमलम्॥ कषीका कदलिका॥ हृषीकम् इन्द्रियम्॥ दृशीकं मनोज्ञम्॥ मृडीकं सुखकृत्॥ वलीकं वेश्मस्तारु [?]॥ स्यमीकं जलम्॥ अनीकं सेनाङ्गम्॥

## ॥ ३६९ ॥ मृद्वीकातिन्तिडीकबाह्लीकवल्मीककल्मलीककिङ्किणीकपुण्डरीकचञ्चरीकसमीकप्रतीकपूतीकफर्फरीकादयः ॥ २. २. २० ॥

मृद्वीकादयः कीकन्प्रत्ययान्ता निपात्यन्ते। मिदेर्वुक् च। मृद्वीका द्राक्षा॥ तिमेस्तिडक् च। तिन्तिडीका वृक्षाम्लम्॥ बहेर्वृद्धिश्च। बाह्लीकः राजा॥ वलेर्मुक् च। वल्मीकं नाकुः॥ कलेर्मलक् च। कल्मलीकं ज्वालः॥ किणेः कमिणः। किङ्किणीका घण्टिका॥ पुणेर्डरन्। पुण्डरीकं पद्मम्॥ चञ्चेररक् च। चञ्चरीकः भ्रमरः॥ संयन्त्यस्मिन्निति समीकं संग्रामः॥ प्राति शरीरमिति प्रतीकः अवयवः। सुप्रतीको नाम दिग्गजः॥ पुवस्तुट् च। पूतीकं नाम तृणजातिः॥ पिपर्तेर्गुणे द्वित्वम्, पकारयोगश्च, रुट्चाभ्यासस्य। फर्फरीकं पल्लवम्। आदिग्रहणात् मर्मरीकजर्जरीक········ [दयो] भवन्ति॥

## ॥ ३७० ॥ समिकसेरुकन् ॥ २. २. २१ ॥

कसेः सम्युपपदे उकन्प्रत्ययो भवति। संकसुकः परापवादशीलः॥

## ॥ ३७१ ॥ कमितिम्योर्दुक् च ॥ २. २. २२ ॥

आभ्यामुकन्प्रत्ययः, दुक् चागमो भवति। कन्दुकं क्रीडनकम्॥ तिन्दुकः वृक्षविशेषः॥

## ॥ ३७२ ॥ अशिकशोर्नुं च ॥ २. २. २३ ॥

आभ्यामुकन्प्रत्ययो नुं चागमो भवति। अंशुकं वस्त्रम्॥ कञ्चुकं कूर्पासः॥

॥ ३७३ ॥ कुहेः कित् ॥ २. २. २४ ॥

कुहेरुकन्प्रत्ययः किद्भवति । कुहुकम् आश्चर्यम् ॥

॥ ३७४ ॥ क्रमेः क्रम् च वा ॥ २. २. २५ ॥

क्रमेरुकन्प्रत्ययः क्रमादेशश्च भवति । क्रमुकः पूगः । क्रमुकं बन्धनम् ॥

॥ ३७५ ॥ चुलुकोल्मुकचिबुकचूचुकजम्बुकगवेधुकामधुकभावुकपृथुकादयः ॥ २. २. २६ ॥

चुलुकादय उकन्प्रत्ययान्ता निपात्यन्ते । चुलुम्पतीति चुलुकम् करकोशम् ॥ ज्वलतीति उल्मुकः अलातम् ॥ चिनोतीति चिबुकम् आस्याधोभागः ॥ चरतेरत ऊत्चुश्च । चूचुकं स्तनचारुभगः ॥ जमेर्बुक् च । जम्बुकः सृगालः ॥ गविपीनीये इन्धे (?) गवेधुका नाम तृणजातिः ॥ मचेर्धश्च । मधुकं यष्टिमधु ॥ भातेर्वुक् च । भावुकः भगिनीपतिः ॥ प्रथेः प्रसारणं च । पृथुकः बालः । आदिग्रहणात् मण्डूकलड्डुकवालुकादयो भवन्ति ॥

॥ ३७६ ॥ मृकणिजलिवलिबन्धिभल्लिभ्य ऊकः ॥ २. २. २७ ॥

मृप्रभृतिभ्यः ऊकप्रत्ययो भवति । मरूकः निर्दर्शनेहा ॥ कणूकः धान्यस्तोक' ॥ जलूका जलजन्तुः ॥ वलूकः उत्पलमूलम् ॥ बन्धूकः बन्धुजीवः॥ भल्लूकः अच्छभल्लः ॥

॥ ३७७ ॥ शलिमण्डिभ्यां णित् ॥ २. २. २८ ॥

आभ्यामूकप्रत्ययो णिद्भवति । शालूकं कन्दविशेषः ॥ मण्डूकः दर्दुरः ॥

॥ ३७८ ॥ मधूकोलूकोरुबूकशम्बूकवरूकादयः ॥ २. २. २९ ॥

मधूकादय ऊकप्रत्ययान्ता निपात्यन्ते । मदयतीति मधूकः वृक्षजातिः ॥ अलेरुश्चोपधायाः । उलूकः पक्षी ॥ उरु पाति गुरु········क····[उरबूकः]

एरण्डकः ॥ शबेर्मु च । शम्बूकः क्षुद्रशङ्खः ॥ वर्धत इति वरूकः तृणजातिः । आदिग्रहणात् वधूलूकादयो भवन्ति ॥

॥ ३७९ ॥ कोङ्को रो लश्च वा ॥ २. २. ३० ॥

किरतेरङ्कप्रत्ययो रेफश्च लकारादेशो वा भवति । करङ्कः समुद्रः ॥ कलङ्कः लाञ्छनम् ॥

॥ ३८० ॥ राला पाकाभ्यः कित् ॥ २. २. ३१ ॥

रादिभ्योऽङ्कप्रत्ययः किद्भवति । रङ्कः अबलीयान् ॥ लङ्का नाम पुरी ॥ पङ्कः कर्दमः ॥ कङ्कः पक्षी ॥

॥ ३८१ ॥ कलेरविङ्कः ॥ २. २. ३२ ॥

कलेरविङ्कप्रत्ययो भवति । कलविङ्कः गृहवाटकः ॥

॥ ३८२ ॥ क्रमेरेलकः ॥ २. २. ३३ ॥

क्रमेरेलकप्रत्ययो भवति । क्रमेलकः करभः ॥

॥ ३८३ ॥ लूभीशीङ्शिङ्घिभ्य आनकः ॥ २. २. ३४ ॥

लुनात्यादिभ्यः आनकप्रत्ययो भवति । लवानकः नाम देशः ॥ भयानकः भयङ्करः ॥ शयानकः अजगरः । शिङ्घानकः श्लेष्म ॥

॥ ३८४ ॥ अनेर्डित् ॥ २. २. ३५ ॥

अनेरानकप्रत्ययः डिद्भवति । आनकः पटहः ॥

॥ ३८५ ॥ कनेरीनकः ॥ २. २. ३६ ॥

कनेरीनकप्रत्ययो भवति । कनीनका कनीनिका वा अक्षितारका ॥

॥ ३८६ ॥ कृतिभिदिलतिपुतिभ्यः क्तिकन् ॥ २. २. ३७ ॥

एभ्यः क्तिकन्प्रत्ययो भवति । कृत्तिका नक्षत्रम् ॥ भित्तिका कुड्यम् ॥ "लतिपुती" सौत्रधातू । लत्तिका गोधा ॥ पुत्तिका मधुमक्षिका ॥

॥ ३८७ ॥ इष्यसिभ्यां क्तकन् ॥ २. २. ३८ ॥

आभ्यां क्तकन्प्रत्ययो भवति । इष्टका मृद्विकारः ॥ अष्टका श्राद्धकालः ॥

॥ ३८८ ॥ भियो द्वे च ॥ २. २. ३९ ॥

भियः क्तकन्प्रत्ययो द्विर्वचनं च भवति । बिभीतकः अक्षः ॥

॥ ३८९ ॥ हृरुहिपिण्डिभ्य ईतकः ॥ २. २. ४० ॥

हृप्रभृतिभ्य ईतकप्रत्ययो भवति । हरीतकी पथ्या ॥ रोहितकी नाम वृक्षः ॥ पिण्डीतकः करहाटकः ॥

॥ ३९० ॥ कुषेः कित् ॥ २. २. ४१ ॥

कुषेरीतकप्रत्ययः किद्भवति । कुषीतकः नाम मुनिः ॥

॥ ३९१ ॥ चण्डिभल्लिभ्यामातकः ॥ २. २. ४२ ॥

आभ्यामातकप्रत्ययो भवति । चण्डातकं नर्तक्या निवासः ॥ भल्लातकः वृक्षविशेषः ॥

॥ ३९२ ॥ श्लेष्मातकाम्रातकामिम्लातकपिष्टातकादयः ॥ २. २. ४३ ॥

एते शब्दा आतकप्रत्ययान्ता निपात्यन्ते । श्लिष्यतीति श्लेष्मातकः कफेलुक् ॥ अमेर्वृद्धिश्च । आम्रातकः वृक्षविशेषः ॥ न म्लायतीति अमिम्लातकं वर्णपुष्पम् ॥ पिष्यत इति पिष्टातकः पर्णचूर्णम् । आदिग्रहणात् केतका-श्मन्तककोशातक्यादयो भवन्ति ॥

॥ ३९३ ॥ शमिमनिभ्यां खः ॥ २. २. ४४ ॥

आभ्यां खप्रत्ययो भवति । शङ्खः कम्बुः ॥ मङ्खः मागधः ॥

॥ ३९४ ॥ मुहेः खर्मूर्च ॥ २. २. ४५ ॥

मुहेः खप्रत्ययः, मूर्चादेशो भवति । मूर्खः अविद्वान् ॥

॥ ३९५ ॥ इषेः किद् लोपश्च ॥ २. २. ४६ ॥

उषेः खप्रत्ययः कित् अन्त्यस्य लोपो भवति । उखा स्थाली ॥

॥ ३९६ ॥ महेरुच्चास्य वा ॥ २. २. ४७ ॥

महेः खप्रत्ययः किदन्तस्य लोपोऽकारस्य चोकारादेशो भवति । मुखं आननम् ॥ मखः यज्ञः ॥

॥ ३९७ ॥ श्यतेरिच्चास्य वा ॥ २. २. ४८ ॥

श्यते. खप्रत्ययः इकारश्चान्तादेशो वा भवति । शिखा चूडा । विशिखा आपणः । विशिखः बाणः । शाखा विटपः । विशाखा नक्षत्रम् । विशाखः स्कन्दः ॥

॥ ३९८ ॥ निय ऊनक् च ॥ २. २. ४९ ॥

नयतेः खप्रत्ययः ऊनक् चागमो भवति । न्यूङ्खः षडोङ्कारः ॥

॥ ३९९ ॥ पुवो नुं ह्रस्वश्च ॥ २. २. ५० ॥

पुवः खप्रत्ययः नुं ह्रस्वश्च भवति । पुङ्खः बाण········भागः ॥

॥ ४०० ॥ अश्नोतेर्डित् ॥ २. २. ५१ ॥

अश्नोतेः खप्रत्ययो डिद्भवति । अश्नुत इति खम् आकाशम् । नास्य खमस्तीति नखम् । शोभनानि खान्यस्मिन् मुखम् । दुष्टानि खान्यस्मिन् दुःखम् ॥

॥ ४०१ ॥ मयतेरूट् च ॥ २. २. ५२ ॥

मयतेः खप्रत्ययः ऊट्चागमो भवति । मयूखः रश्मिः ॥

॥ ४०२ ॥ गृभृस्वृभ्यो गः ॥ २. २. ५३ ॥

गृप्रभृतिभ्यो गप्रत्ययो भवति । गर्गः मुनिः । भर्गः रुद्रः ॥ स्वर्गः नाकः ॥

॥ ४०३ ॥ मुदिखडिछापूभ्यः कित् ॥ २. २. ५४ ॥

मुदिप्रभृतिभ्यः गप्रत्ययः किद्भवति । मुद्गः धान्यविशेषः ॥ खड्गः कृपाणः ॥ छागः अजः ॥ पूगः सङ्घः ॥

॥ ४०४ ॥ गम्यदिभ्यां गन् ॥ २. २. ५५ ॥

आभ्यां गन्प्रत्ययो भवति । गङ्गा देवनदी ॥ अद्गः समुद्रः ॥

॥ ४०५ ॥ भृशूभ्यां किनुण् च ॥ २. २. ५६ ॥

आभ्यां गन्प्रत्ययः किनुण् चागमो भवति । भृङ्गः भ्रमरः ॥ "शु गतौ" शुङ्गः ॥

॥ ४०६ ॥ भृपीङ्भ्यां ह्रस्वश्च ॥ २. २. ५७ ॥

भृपीङ्भ्यां गन्प्रत्ययः, किनुण् चागमो ह्रस्वश्च भवति । भृङ्ग विषाणन् ॥ पिङ्गम्········॥

॥ ४०७ ॥ तडेरागच् ॥ २. २. ५८ ॥

तडेरागच्प्रत्ययो भवति । तडागः सरः ॥

॥ ४०८ ॥ पतितमितृलूभ्योऽङ्गच् ॥ २. २. ५९ ॥

पत्यादिभ्योऽङ्गच्प्रत्ययो भवति । पतङ्गः पक्षी ॥ तमङ्गः हर्म्यनिर्व्यूहः ॥ तरङ्गः········॥ लवङ्गः वृक्षजातिः ॥

॥ ४०९ ॥ सृवृनीभ्यो णित् ॥ २. २. ६० ॥

एभ्योऽङ्गच्प्रत्ययो णिद्भवति । सारङ्गः मृगः ॥ वारङ्गः काण्डशल्यम् ॥ नारङ्गः वृक्षजातिः ॥

॥ ४१० ॥ कुरुवृषिमृदिपिशिभ्यः कित् ॥ २. २. ६१ ॥

कुर्वादिभ्योऽङ्गच्प्रत्ययो···········किद्भवति । कुरङ्गः हरिणः ॥ वृषङ्गः वृक्षजातिः ॥ मृदङ्गः मुरजः ॥ पिशङ्गः वर्णः ॥

॥ ४११ ॥ मनस्तुट् च ॥ २. २. ६२ ॥

मनोऽङ्गच्प्रत्ययः कित् तुट्चागमो भवति । मतङ्गः मुनिः ॥

॥ ४१२ ॥ कलिस्फुलिभ्यामिङ्गक् ॥ २. २. ६३ ॥

अभ्यामिङ्गक्प्रत्ययो भवति। कलिङ्गः राजा ॥ स्फुलिङ्गः स्फुलिङ्गा च ज्योतिःकणः ॥

॥ ४१३ ॥ भृञो भुल् च ॥ २. २. ६४ ॥

बिभर्तेरङ्गच्प्रत्ययो भवति, भुल् चादेशः। भुलिङ्गं शकुनिः ॥

॥ ४१४ ॥ माङि तुलेरुङ्गच् ॥ २ २. ६५ ॥

तुलयतेः माङि उपपदे उङ्गच्प्रत्ययो भवति। मातुलुङ्गः बीजपूरकः ॥

॥ ४१५ ॥ कमितमिशमिभ्यो डित् ॥ २. २. ६६ ॥

कम्यादिभ्य उङ्गच्प्रत्ययो डिद्भवति। कुङ्गः नाम जनपदः ॥ तुङ्गं महावर्ष्मा ॥ शुङ्गः मुनिः। शुङ्गा विनता। शुङ्गा कन्दर्पः ॥

॥ ४१६ ॥ सर्तेरुच्च ॥ २. २. ६७ ॥

सर्तेरुङ्गच्प्रत्ययः उकारश्चान्तादेशो भवति। सुरुङ्गः गूढमार्गः ॥

॥ ४१७ ॥ जनेर्घः ॥ २. २. ६८ ॥

जनेर्घप्रत्ययो भवति। जङ्घा शरीरावयवः ॥

॥ ४१८ ॥ दृणातेः कित् ॥ २. २. ६९ ॥

दृणातेः घप्रत्ययः किद्भवति। दीर्घः आयतः ॥

॥ ४१९ ॥ सर्तेरघच्च ॥ २. २. ७० ॥

सर्तेरघच्प्रत्ययो भवति। सरघा मधुमक्षिका ॥

॥ ४२० ॥ कुवश्चट् दीर्घश्च ॥ २. २. ७१ ॥

कौतेश्चट्प्रत्ययो दीर्घश्च भवति। कूच् कीलाटकूची ॥

॥ ४२१ ॥ सिवेष्टेरू च ॥ २. २. ७२ ॥

सीव्यतेः चट्प्रत्ययः, आदेश्चोकारादेशो भवति। सूचः स्तिभिः। सूची ॥

॥ ४२२ ॥ कृञश्च ॥ २. २. ७३ ॥

कृञश्च चट्प्रत्ययः टेरू च भवति । कूर्चं श्मश्रु । कूर्चमिव कूर्चकं कूर्चिकेति ॥

॥ ४२३ ॥ उच्चेश्चक् ॥ २. २. ७४ ॥

उच्चेश्चक्प्रत्ययो भवति । उच्चः प्रांशुः ॥

॥ ४२४ ॥ कवेरच्चच् ॥ २. २. ७५ ॥

कवेरच्चच्प्रत्ययो भवति । कवचं सन्नाहः ॥

॥ ४२५ ॥ क्रमेः क च ॥ २. २. ७६ ॥

क्रमेरचच्प्रत्ययः कश्चान्तादेशो भवति । ककचं करपात्रम् ॥

॥ ४२६ ॥ मृङ इचच् ॥ २. २. ७७ ॥

मृङ इचच्प्रत्ययः । मरिचम् उष्णम् ॥

॥ ४२७ ॥ नमेर्डिचच् ॥ २. २. ७८ ॥

नमेः डिचच्प्रत्ययः । नीचः निम्नः ॥

॥ ४२८ ॥ लषेरुचन् कश्च ॥ २. २. ७९ ॥

लषेरुचन्प्रत्ययः कश्चान्तादेशो भवति । लकुचः वृक्षजातिः ॥

॥ ४२९ ॥ गुडेरूचक् ॥ २. २. ८० ॥

गुडेरूचक्प्रत्ययो भवति । गुडूची छिन्नरुहा ॥

॥ ४३० ॥ चिम्योर्डोचच् ॥ २. २. ८१ ॥

चिम्योर्डोचच्प्रत्ययो भवति । चोचः वृक्षविशेषः ॥ मोचा कदली ॥

॥ ४३१ ॥ अञ्चच् ॥ २. २. ८२ ॥

चिम्योरञ्चच्प्रत्ययो भवति । चञ्चा तृणमयः पुरुषः ॥ मञ्चः पर्यङ्कः ॥

॥ ४३२ ॥ गुगम्यदितुदिमुदिभ्यश्छक् ॥ २. २. ८३ ॥

गुप्रभृतिभ्यः छक्प्रत्ययो भवति । गुच्छः स्तवकः ॥ गच्छः क्षुद्रवृक्षः ॥ अच्छं निर्मलम् ॥ तुच्छः स्तोकः ॥ मच्छः मत्स्यः ॥

॥ ४३३ ॥ पूङ्पीङोर्ह्रस्वश्च ॥ २. २. ८४ ॥

आभ्यां छक्प्रत्ययः ह्रस्वश्च भवति । पुच्छं वालधिः ॥ पिच्छं बर्हिः । पिच्छा पिच्छिलतम् ॥

॥ ४३४ ॥ कच्छगुलुच्छपिलिपिच्छादयः ॥ २. २. ८५ ॥

कच्छादयः छक्प्रत्ययान्ता निपात्यन्ते । कषेः छ च । कच्छः देशविशेषः ॥ गुदेरुदौ गलश्च । गुलुच्छः स्तबकः ॥.........पिलिपिच्छः रक्षोविशेषः । आदिग्रहणात् पिच्छादयो भवन्ति ॥

॥ ४३५ ॥ वियो जक् ॥ २. २. ८६ ॥

वीतेः जक्प्रत्ययो भवति । बीजं उत्पत्तिहेतुः ॥

॥ ४३६ ॥ पुवो नुक् ह्रस्वश्च ॥ २. २. ८७ ॥

पवतेः पुनातेर्वा जक्प्रत्ययो नुमागमो ह्रस्वश्च भवति । पुञ्जः राशिः ॥

॥ ४३७ ॥ कुवोर्बुक् च वा ॥ २. २. ८८ ॥

कुवतेः कौतेर्वा जक्प्रत्ययो बुगागमो नुमागमश्च वा भववि । कुब्जः वक्रानताङ्गः ॥ कुञ्जः पर्वतैकदेशः । निकुञ्जः गहनम् ॥

॥ ४३८ ॥ कुलेरिजक् ॥ २. २. ८९ ॥

कुलेरिजक्प्रत्ययो भवति । कुलिजः मानः ॥

॥ ४३९ ॥ कृञोऽञ्जच् ॥ २. २. ९० ॥

करोतेरञ्जच्प्रत्ययो भवति । करञ्जः वृक्षजातिः ॥

॥ ४४० ॥ मुर्वेरजग्लोपश्च ॥ २. २. ९१ ॥

मुर्वेरजक्प्रत्ययः अन्त्यलोपश्च । मुरजः मृदङ्गः ॥

॥ ४४१ ॥ कुटजोटजबल्बजादयः ॥ २. २. ९२ ॥

कुटजादयः शब्दा अजक्प्रत्ययान्ता निपात्यन्ते। कुटेराद्युदात्तत्वं च। कुटजा वृक्षजातिः ॥ उटजः मुनिकुटीरम् ॥ बलेर्बुक् च वा। ससुवसो-धान्यपुञ्जः [?]। बल्बजः मुञ्जविशेषः । आदिग्रहणात् भूर्जभरुजभेषजादयो भवन्ति ॥

॥ ४४२ ॥ झमेर्झः ॥ २. २. ९३ ॥

झमेर्झप्रत्ययो भवति। झञ्झा सशीकरो मेघजातम् ॥

॥ ४४३ ॥ लुषेष्टः ॥ २. २. ९४ ॥

लुषेष्टप्रत्ययो भवति। लोष्टं मृत्पिण्डः ॥

॥ ४४४ ॥ जुकिजनिपणिभ्यो दीर्घश्च ॥ २. २. ९५ ॥

जुप्रभृतिभ्यष्टप्रत्ययो भवति, दीर्घश्चैषां गुणापवादो भवति। जूटा मौलिः ॥ कीटः क्षुद्रजन्तुः ॥ जाण्टः पक्षिविशेषः ॥............[पाण्टः]........ ॥

॥ ४४५ ॥ घण्टाजटासटादयः ॥ २. २. ९६ ॥

घण्टादयः शब्दाष्टप्रत्ययान्ता निपात्यन्ते। घणयतीति घण्टा वाद्यविशेषः ॥ जनसनोर्लोपश्च। जटा ग्रथितः केशसङ्घातः ॥ सटा अग्रथितः । आदिग्रहणात् छटादयो भवन्ति। घाटाघटादीनामङा वक्ष्यति ॥

॥ ४४६ ॥ कृसृभृपृकृषशकिकङ्किकर्किमर्क्य-विभ्योऽटच् ॥ २. २. ९७ ॥

कृप्रभृतिभ्योऽटच्प्रत्ययो भवति। करटः काकः ॥ सरटः कृकलासः ॥ भरटः प्लवविशेषः ॥ परटः क्षुद्रधान्यम् ॥ कर्षटः क्षुद्रपत्तनम् ॥ शकटम् अनः ॥ कङ्कटः सन्नाहः। कङ्कटम् सीमा ॥ कर्कटः कपिलः। कर्कटी त्रपुसी ॥ मर्कटः कपिः ॥ अवटः प्रपातः ॥

॥ ४४७ ॥ कीकटकपटकर्पटादयः ॥ २. २. ९८ ॥

कीकटादयः शब्दा अटच्प्रत्ययान्ता निपात्यन्ते। ककेरक ईत्वम्। कीकटः कृपणः॥ कम्पेर्नलोपश्च। पटकः माया॥ कपेः प्रत्ययान्तोदात्तत्वं च। कर्पटः वस्त्रम्। आदिग्रहणात् पर्पटादयो भवन्ति॥

॥ ४४८ ॥ किरतेराटग्लश्च वा ॥ २. २. ९९ ॥

किरतेराटक्प्रत्ययो लकारश्चान्तादेशो वा भवति। किराटः वणिक्॥ किलाटः भक्ष्यविशेषः॥

॥ ४४९ ॥ शृङ्गाटकपाटललाटविराटप्रपुना-
टादयः ॥ २. २. १०० ॥

शृङ्गाटादयः शब्दाः आट् गक् च प्रत्ययान्ता निपात्यन्ते। श्रयतेः संप्रसारणं नुट् च। शृङ्गाटः जलविशेषः॥ कवेः पश्च। कपाटः अररम्॥ लाटेः द्वित्वं च। ललाटम् आलिकम्॥ वृङ इत्वं च। विराटः राजा॥ प्रपुणो नश्च। प्रपुनाटः एडगजः। आदिग्रहणात् राटादयो भवन्ति॥

॥ ४५० ॥ चेरेरिटच् भश्च ॥ २. २. १०१ ॥

चिरिणोतेरिटच्प्रत्ययो भकारश्चान्तादेशो भवति। चिर्भिटिः बालक्रीडा॥

॥ ४५१ ॥ डिण्टन् ॥ २. २. १०२ ॥

चिरिणोतेः डिण्टन्प्रत्ययो भवति। चिरिण्टी अप्राप्तवयाः स्त्री॥

॥ ४५२ ॥ कृतृकृपिभ्यः कीटन् ॥ २. २. १०३ ॥

कृप्रभृतिभ्यः कीटन्प्रत्ययो भवति। किरीटं कपर्दः॥ तिरीटः वेष्टनम्॥ कृपीटं हिरण्यम्॥

॥ ४५३ ॥ खञ्जेररीटः ॥ २. २. १०४ ॥

खञ्जेररीटप्रत्ययो भवति। खञ्जरीटः........॥

॥ ४५४ ॥ वृणोतेरूटच् ॥ २. २. १०५ ॥

वृणोतेरूटच्प्रत्ययो भवति। वरूटः अन्त्यजातिः॥

॥ ४५५ ॥ नकुटमकुटकुक्कुटादयः ॥ २. २. १०६ ॥

नकुटादयः शब्दा उटच्प्रत्ययान्ता निपात्यन्ते । नृत्यतीति नकुटः बन्दी ॥ मुचेरगुणत्वं च । मुकुटः किरीटम् ॥ कौतेर्डिः कुकुट् च । कुक्कुटः कृकवाकुः । आदिग्रहणात् स्थपुटादयो भवन्ति ॥

॥ ४५६ ॥ वन्धेः कूटन् ॥ २. २. १०७ ॥

वन्धेः कूटन्प्रत्ययो भवति । वधूटी प्रथमवयाः स्त्री ॥

॥ ४५७ ॥ दुरि द्रोः दुर् च ॥ २. २. १०८ ॥

दुर्युपपदे द्रणातेः कूटन्प्रत्ययो दुर् चादेशो भवति । दुर्दुरूटः दुर्मुखः ॥

॥ ४५८ ॥ चपेरेटच् ॥ २. २. १०९ ॥

चपेरेटच्प्रत्ययो भवति । चपेटः चपेटा वा हस्ततलहतिः ॥

॥ ४५९ ॥ ग्रो णित् ॥ २. २. ११० ॥

गिरतेरेटच्प्रत्ययो णिद्भवति । गारेटः मुनिः ॥

॥ ४६० ॥ करोतेरोटच् ॥ २. २. १११ ॥

करोतेरोटच्प्रत्ययो भवति । करोटं भाजनविशेषः ॥

॥ ४६१ ॥ बकोटाक्षोटकर्कोटादयः ॥ २. २. ११२ ॥

बकोटादयः शब्दा ओटच्प्रत्ययान्ता निपात्यन्ते । वचेः कश्च । बकोटः बकः ॥ अश्यत इत्यर्थे टः । अक्षोटः फलवृक्षः ॥ कृञः कुट् च । कर्कोटः नागः । आदिग्रहणात् शाकोटादयो भवन्ति ।

॥ ४६२ ॥ पीङ्कुणिकणिभ्यष्ठक् ॥ २. २. ११३ ॥

पीङ्प्रभृतिभ्यष्ठक्प्रत्ययो भवति । पीठम् आसनम् ॥ कुण्ठः अतीक्ष्णः ॥ कण्ठः कन्धरः ॥

॥ ४६३ ॥ जूकमिरमिभ्योऽठच् ॥ २. २. ११४ ॥

जॄप्रभृतिभ्योऽठच्प्रत्ययो भवति । जरठः कठोरः ॥ कमठः कच्छपः ॥ रमठः देशः ॥

॥ ४६४ ॥ अमन्ताड्डः ॥ २. २. ११५ ॥

अमन्ताड्डप्रत्ययो भवति । षण्डः वनम् ॥ भण्डः बन्दी ॥ खण्डः शकलम् ॥ दण्डः प्रहरणम् ॥ रण्डा विधवा ॥ सण्डः उत्सृष्टपशुः ॥

॥ ४६५ ॥ कॄसॄभॄवॄतॄभ्योऽण्डः ॥ २. २. ११६ ॥

कॄप्रभृतिभ्यः अण्डन्प्रत्ययो भवति । करण्डं समुद्रः ॥ सरण्डः इषीका ॥ भरण्डः पक्षी ॥ वरण्डः कुटयः ॥ तरण्डः प्लवः ॥

॥ ४६६ ॥ आण्डैरण्डविचण्डकाण्डभाण्डवतण्डपो-गण्डादयः ॥ २. २. ११७ ॥

आण्डादयः शब्दा अण्डन्प्रत्ययान्ता निपात्यन्ते । अचेर्लोपो दीर्घश्च । आण्डः मुष्कः ॥ इरेर्गुणश्च । एरण्डः पञ्चाङ्गुलम् ॥ विचेरगुणत्वं च । विचण्डः लघुलगुडः ॥ काभाभ्यामनिच्च । काण्डं शरः ॥ भाण्डं पण्यम् ॥ वनस्त च । वतण्डः मुनिः ॥ पुवो गुक् च । पोगण्डः बालः । आदिग्रहणात् कूस्माण्डशायण्डशयण्डादयः ॥

॥ ४६७ ॥ लगिगॄभ्यो रुडच् ॥ २. २. ११८ ॥

आभ्यामुडच्प्रत्ययो भवति । लगुडः यष्टिः ॥ गरुडः पक्षिराट् ॥

॥ ४६८ ॥ व्याडनोडक्रोडकहोडादयः ॥ २. २. ११९ ॥

व्याडादयः शब्दाः उडच्प्रत्ययान्ता निपात्यन्ते । व्यङ्नीभ्यामुलोपश्च । व्याडः दुःशीलः ॥ नीडं कुलायः ॥ किरोरटच् । क्रोडः किरिः ॥ कपेर्हश्च । कहोडः मुनिः । आदिग्रहणात् कुहुडलहोडादयो भवन्ति ॥

॥ ४६९ ॥ शमिषणिकुणिभ्यो ढः ॥ २. २. १२० ॥

एभ्यो ढप्रत्ययो भवति । शण्ढः नपुंसकः ॥ षण्ढः स एव ॥ कुण्ढः धूर्तः ॥

॥ ४७० ॥ नञि सहेः षश्चादेः ॥ २. २. १२१ ॥

नञ्युपपदे सहेर्डप्रत्ययः, आदेश्च षकारादेशो भवति । अषाढा नक्षत्रम् ॥

॥ ४७१ ॥ इनुर्विंशाद्रुवेणिभ्यो णः ॥ २. २. १२२ ॥

....[इना] दिभ्यो णप्रत्ययो भवति । एणः हरिणः ॥ ऊर्णा अविलोम ॥ शाणः परिमाणम् ॥ द्रोणी नौः ॥ वेण्णा । कृष्णवेण्णा नदी ॥

॥ ४७२ ॥ वीणास्थूणाहूणभ्रूणक्षूणतूण-
तृणघृणादयः ॥ २. २. १२३ ॥

वीणादयः शब्दाः णप्रत्ययान्ता निपात्यन्ते । वेनेर्गुणाभावश्च । वीणा वल्लकी ॥ तिष्ठतेरू च । स्थूणा धारिणी ॥ ह्वः संप्रसारणं च । हूणः म्लेच्छजातिः ॥ भृञः ऊट् च । भ्रूणः गर्भः ॥ क्षुतुवोर्दीर्घश्च । क्षूणः अपराधः ॥ तूणः इषुधिः ॥ त्रो ह्रस्वश्च । तृणं सस्यादि ॥ घरतेर्गुणाभावश्च ॥ घृणा कृपा । आदिग्रहणात् मसृणघुसृणादयो भवन्ति ॥

॥ ४७३ ॥ अङ्गितङ्गिकङ्किमङ्किकृपिवृषि-
भ्योऽणक् ॥ २. २. १२४ ॥

अङ्ग्यादिभ्योऽणक्प्रत्ययो भवति । अङ्गणम् अजिरम् ॥ तङ्गणा जनपदः ॥ कङ्कणः प्रतिसरः ॥ मङ्कणः मुनिः ॥ कृपणः कीनाशः ॥ वृषणः मुष्कः ॥

॥ ४७४ ॥ धृषेर्धिष च ॥ २. २. १२५ ॥

धृषेरणक्प्रत्ययः धिषादेशो भवति । धिषणा बुद्धिः ॥

॥ ४७५ ॥ कृकणकुङ्कुणतृवणोल्बणोरणवङ्क्षण-
विचक्षणादयः ॥ २. २. १२६ ॥

कुकणादयः अणक्प्रत्ययान्ता निपात्यन्ते । कुञः कट् च ॥ कुकणः मुनिः ॥ कुकेर्णश्च । कुङ्कणः जनपदः ॥ तृपेर्वश्च । तृवणः देशः ॥ वलेर्वड-ल्लुक् च । उल्वणः स्फारः ॥ अर्तेः कुरुच । उरणः मेषः ॥ वङ्केः सुक् लोपश्च । वङ्क्षणः ऊरुमूलसन्धिः ॥ विपूर्वाचक्षिङः ख्याञभावः । विचक्षणः विदग्धः ॥ आदिग्रहणात् ज्योतिरिङ्गणतुरणभुरणादयो भवन्ति ॥

## ॥ ४७६ ॥ कृपिविषिभ्यामाणक् ॥ २. २. १२७ ॥

आभ्यामाणक्प्रत्ययो भवति । कृपाणः खड्गः ॥ विषाणम् शृङ्गम् ॥

## ॥ ४७७ ॥ पाषाणपर्याणकल्याणादयः ॥ २. २. १२८ ॥

पाषाणादयः आणक्प्रत्ययान्ता निपात्यन्ते । पिषेश्चोपधाया । पाषाणः ग्रावा ॥ पराविणो लोपश्च । पर्याणम् अश्वादीनां पृष्ठच्छदः ॥ कल्येर्युट् च । कल्याणं श्वोवसनीयम् । आदिग्रहणात् द्रेक्काणवोकणकिङ्कणादयो भवन्ति ॥

## ॥ ४७८ ॥ गादाभ्यामेष्णक् ॥ २. २. १२९ ॥

आभ्यामेष्णक्प्रत्ययो भवति । रात्रिगेष्णः रङ्गोपजावी ॥ सुगेष्णा किन्नरी ॥ चारुदेष्णः सात्यभामेयः । मुदेष्णा विराटपत्नी ॥

## ॥ ४७९ ॥ हसिवसीणजुगमृवादम्यमिलूपूधू-र्विभ्यस्तन् ॥ २. २. १३० ॥

हसादिभ्यस्तन्प्रत्ययो भवति । हस्तः पाणिः ॥ वस्तः छागः ॥ एतः वर्णः ॥ जर्तः राजा ॥ गर्तः अवटः ॥ मर्तः मनुष्यः ॥ वातः वायुः । दन्तः दशनः ॥ अन्तः ॥ लोतः मेषः ॥ पोतः नौः ॥ धूर्तः कितवः ॥

## ॥ ४८० ॥ तनिमूङ्भूहिभ्यः कित् ॥ २. २. १३१ ॥

एभ्यस्तन्प्रत्ययः किद्भवति । ततं विस्तीर्णम् ॥ मूतं धान्यादि पुटम् ॥ भूतं ग्रहः ॥ भूतं पृथिव्यादि ॥ हितम् उपकारि ॥

## ॥ ४८१ ॥ हुर्च्छेर्मुट् च ॥ २. २. १३२ ॥

हुर्च्छेस्तन्प्रत्ययः मुट् चास्यागमो भवति । मुहूर्तः कालविशेषः ॥

॥ ४८२ ॥ घृमिलूसूदूचितिभ्यः क्तः ॥ २. २. १३३ ॥

घृप्रभृतिभ्यः क्तप्रत्ययो भवति । घृतं सर्पिः ॥ सितं वर्णः ॥ लूता क्षुद्रजन्तुः ॥ सूतः सारथिः ॥ दूतः वचोहरः ॥ चित्तं मनः ॥

॥ ४८३ ॥ तातव्रातालातसुतपुतपित्तनिमित्तमुस्त-पुस्ततूस्तविस्तवितस्तादयः ॥ २. २. १३४ ॥

तातादयः शब्दाः क्तप्रत्ययान्ता निपात्यन्ते । तनिव्रजोरा········[त्वम्] तातः पिता ॥ व्रातः समूहः ॥ लानेर्नञि अलातम् उल्मुकम् ॥ सुङ्पुवोः ह्रस्वश्च । सुतः पुत्रः ॥ पुतः स्फिक् ॥ पिन्दस्तुट् च । पित्तं मायु ॥ नौ मिङ्स्तद्वत् । निमित्तं हेतुः ॥ मुषिपुषोः स च । मुस्ता कन्दविशेषः ॥ पुस्तं लेप्यम् ॥ तुसेर्दीर्घश्च । तूस्ता निर्वस्तुदेशाः ॥ विशेः स च । विस्तं मानम् ॥ वौ तसेर्णिच्च । वितस्ता नाम नदी । आदिग्रहणात् अयुत-नियुतसूरतादयः ॥

॥ ४८४ ॥ भृदृशिवलियजादिभ्योऽतच् ॥ २. २. १३५ ॥

भृप्रभृतिभ्योऽतच्प्रत्ययो भवति । भरतः राजा ॥ दर्शतः द्रष्टा ॥ वलतः कुसूलम् ॥ यजतः यज्वा । आदिग्रहणात् कङ्कतविकङ्कतादयो भवन्ति ॥

॥ ४८५ ॥ पृषिरञ्जिसिकिभ्यः कित् ॥ २. २. १३६ ॥

एभ्योऽतच्प्रत्ययः किद्भवति । पृषतः मृगः ॥ रजतं तारम् ॥ सिकता वालुका ॥

॥ ४८६ ॥ कृविलिभ्यामातच् ॥ २. २. १३७ ॥

अभ्यामातच्प्रत्ययः किद्भवति ॥ किरातः शबरः ॥ विलातः बालः ॥

॥ ४८७ ॥ जृविशिवहिवसिभूजिरेवसाधिभासिगडिमडि-नन्दिभ्योऽन्तच् ॥ २. २. १३८ ॥

जॄप्रभृतिभ्योऽन्तच्प्रत्ययो भवति । जरन्तः महिषः ॥ वेशन्तः पल्वलम् ॥ वहन्तः रथः ॥ वसन्तः ऋतुः ॥ भवन्तः कालः ॥ जयन्तः इन्द्रपुत्रः ॥ रेवन्तः सूर्यपुत्रः ॥ साधयन्तः भिक्षुः ॥ भासयन्त: सूर्यः ॥ गण्डयन्तः मेघः ॥ मण्डयन्तः प्रसाधकः ॥ नन्दयन्तः सुखकृत् ॥

॥ ४८८ ॥ हिदुषोर्मुक्षुकौ च ॥ २. २. १३९ ॥

आभ्यामन्तच्प्रत्ययः यथासङ्ख्यं चानयोर्मुक् वुक् चागमो भवति ॥ हेमन्तः ऋतुः । दुष्वन्तः राजा ॥

॥ ४८९ ॥ रुहिजीविभ्यां षित् ॥ २. २. १४० ॥

आभ्यामन्तच्प्रत्ययः षिद्भवति । रोहन्तः तरुः । रोहन्ती ओषधिः ॥ जीवन्तः मणी । जीवन्ती शाकः ॥

॥ ४९० ॥ पलिरुहिश्वाहृभ्य इतन् ॥ २. २. १४१ ॥

पलिप्रभृतिभ्यः इतन्प्रत्ययो भवति । पलितं श्वेतकेशः ॥ रोहितः वर्णः । लत्वेन लोहितः । लोहितम् असृक् ॥ श्वेतः वर्णः ॥ हरितः वर्णः ॥

॥ ४९१ ॥ नञ्यापेः ॥ २. २. १४२ ॥

नञ्युपपदे आपेर्धातोः इतन्प्रत्ययो भवति । नापितः कारुविशेषः ॥

॥ ४९२ ॥ उचिकुसिपिशिपृषिभ्यः कित् ॥ २. २. १४३ ॥

उच्यादिभ्य इतन्प्रत्ययः किद्भवति । उचितम् अनुरूपम् ॥ कुसितः मुनिः ॥ पिशितं मांसम् ॥ पृषितं वारिबिन्दुः ॥

॥ ४९३ ॥ हृञ ईतन् ॥ २. २. १४४ ॥

हृञः ईतन्प्रत्ययो भवति । हरीतः पक्षी ॥

॥ ४९४ ॥ अदि भुवो डुतच् ॥ २. २. १४५ ॥

भुवः अद्युपपदे डुतच्प्रत्ययो भवति । अद्भुतम् आश्चर्यम् ॥

॥ ४९५ ॥ शाकेरन्तः ॥ २. २. १४६ ॥

शकेरुन्तप्रत्ययो भवति । शकुन्तः पक्षी ॥

॥ ४९६ ॥ कषेर्डित् ॥ २. २. १४७ ॥

कषेरुन्तप्रत्ययो डिद्भवति । कुन्तः आयुधम् ॥

॥ ४९७ ॥ कुलिमयिभ्यामूतक् ॥ २. २. १४८ ॥

आभ्यामूतक्प्रत्ययो भवति । कुलूनः जनपदः ॥ मयूता वसतिः ॥

॥ ४९८ ॥ कम्पेरोतो नलोपश्च ॥ २. २. १४९ ॥

कम्पेरोतप्रत्ययो नलोपश्च भवति । कपोतः पक्षी ॥

॥ ४९९ ॥ आङि स्फायेर्डित् ॥ २. २. १५० ॥

स्फायेराङ्युपपदे ओतप्रत्ययो डित् भवति । आस्फोता नामौषधिः ॥

॥ ५०० ॥ नीरमिकुषकाषिभ्यः क्थन् ॥ २. २. १५१ ॥

नीप्रभृतिभ्यः क्थन्प्रत्ययो भवति । सुनीथः नीतिमान् ॥ रथः स्यन्दनम् ॥ कुष्ठं व्याधिः ॥ काष्ठं दारु ॥

॥ ५०१ ॥ अवे भृञः ॥ २. २. १५२ ॥

बिभर्तेरवे उपपदे क्थन्प्रत्ययो भवति । अवभृथः यज्ञावसानम् ॥

॥ ५०२ ॥ उषिकुषिकमिगार्तिभ्यस्थन् ॥ २. २. १५३ ॥

उष्यादिभ्यस्थन्प्रत्ययो भवति । ओष्ठः अधरः ॥ कोष्ठं कुसूलम् ॥ कन्था आवरणम् ॥ गाथा श्लोकः ॥ अर्थः अभिधेयादि ॥

॥ ५०३ ॥ सर्तेर्णित् ॥ २. २. १५४ ॥

सर्तेस्थन्प्रत्ययो णिद्भवति । सार्थः समूहः ॥

॥ ५०४ ॥ पातॄतुदिवचिरिचिसिचि-
विषिभ्यस्थक् ॥ २. २. १५५ ॥

पिबत्यादिभ्यस्थक्प्रत्ययो भवति । पीथः पानम् ॥ तीर्थः जलावतारः ॥ तुत्थं द्रव्यविशेषः ॥ उक्थम् सामविशेषः ॥ रिक्थम् द्रव्यम् ॥ सिक्थं पुलाला ॥ विष्ठा पुरीषम् ॥

॥ ५०५ ॥ संनिन्युद्भ्योऽन्विणर्तिशीङ्गापाभ्यः ॥ २. २. १५६ ॥

समादिषूपपदेषु इणादिभ्यस्थक्प्रत्ययो भवति । समिथः सङ्गमः ॥ निर्ऋथः निकायः ॥ निशीथः अर्धरात्रः ॥ उद्गीथः प्रथमोच्चारणम् ॥ गोपीथः जलद्रोणी ॥

॥ ५०६ ॥ गूथयूथप्रोथपृष्ठादयः ॥ २. २. १५७ ॥

गूथादयः शब्दास्थक्प्रत्ययान्ता निपात्यन्ते । गुपो दीर्घश्च । गूथम् पुरीषम् ॥ यूथं समूहः ॥ प्रवतेः उश्च । प्रोथः अश्वादिमुखाग्रभागः ॥ स्पृशेः सलोपश्च । पृष्ठं शरीरावयवः । आदिग्रहणात् दथावगाथादयो भवन्ति ॥

॥ ५०७ ॥ शीङ्शपिशमिगमिवन्दिबन्धिजीविप्राण्युपसृष्टवसिभ्योऽथः ॥ २. २. १५८ ॥

शीङादिभ्योऽथप्रत्ययो भवति । शयथः वराहः ॥ शपथः प्रत्ययकारणम् ॥ शमथः समाधिः ॥ गमथः पन्थाः ॥ वन्दथः स्तोता ॥ बन्धथः कोकिलः ॥ जीवथः वायुः ॥ प्राणथः बलवान् ॥ आवसथम् गृहम् ॥ उपवसथं सुत्याहात्पूर्वमहः ॥

॥ ५०८ ॥ भृञश्चित् ॥ २. २. १५९ ॥

भृञोऽथप्रत्ययश्चिद्भवति । भरथः लोकपालः ॥

॥ ५०९ ॥ विदः कित् ॥ २. २. १६० ॥

विदोऽथप्रत्ययो भवति । विदथः यज्ञः ॥

॥ ५१० ॥ रुवो वा ॥ २. २. १६१ ॥

रुवोऽथप्रत्ययः किद्भवति । रवथः शब्दकारः ॥ रुवथः शिशुः ॥

॥ ५११ ॥ जॄवृभ्यामूथन् ॥ २. २. १६२ ॥

आभ्यामूथन्प्रत्ययो भवति । जरूथः कलुषम् ॥ वरूथः सेनाङ्गम् ॥

॥ ५१२ ॥ शपेर्दन् ॥ २. २. १६३ ॥

शपेर्दन्प्रत्ययो भवति । शब्दः ध्वनिः ॥

॥ ५१३ ॥ आपो ह्रस्वश्च ॥ २. २. १६४ ॥

आपेर्दन्प्रत्ययो ह्रस्वश्च भवति । अब्दः वर्षः ॥

॥ ५१४ ॥ गुवः कित् ॥ २. २. १६५ ॥

गुवो दन्प्रत्ययः किद्भवति । गुदः अपानम् ॥

॥ ५१५ ॥ वृतुसुकुभ्यो नुं च ॥ २. २. १६६ ॥

वृप्रभृतिभ्यो दन्प्रत्ययः कित् नुं च भवति । वृन्दम् समूहः ॥ तुन्दम् उदकम् ॥ सुन्दः दानवः ॥ कुन्दं पुष्पजातिः ॥

॥ ५१६ ॥ ककिमकिभ्यामन्दन् ॥ २. २. १६७ ॥

आभ्यामन्दन्प्रत्ययो भवति । ककन्दः रा······· [राजा] ॥ मकन्दः राजा ॥

॥ ५१७ ॥ अलिपुलिकलिभ्यः किन्दन् ॥ २. २. १६८ ॥

एभ्यः किन्दन्प्रत्ययो भवति । अलिन्दः प्रघाणः ॥ पुलिन्दः शबरः ॥ कलिन्दः पर्वतः ॥

॥ ५१८ ॥ मुचेर्डुकुन्दकुकुन्दौ ॥ २. २. १६९ ॥

मुचेः डुकुन्दककुन्दौ प्रत्ययौ भवतः । मुकुन्दः विष्णुः ॥ मुचुकुन्दः राजा ॥

॥ ५१९ ॥ यमेरुन्दन् ॥ २. २. १७० ॥

यमेरुन्दन्प्रत्ययो भवति । यमुन्दः क्षत्रियविशेषः ॥

॥ ५२० ॥ ककेरुदन् णिच्च वा ॥ २. २. १७१ ॥

ककेरुदन्प्रत्ययः णित्त्वं चास्य वा भवति । ककुदं स्कन्धः ॥ काकुदं तालु ॥

॥ ५२१ ॥ अर्तिबुदोर्बुक् च ॥ २. २. १७२ ॥

आभ्यामुदन्प्रत्ययः बुक्चागमो भवति । अर्बुदः पर्वतः ॥ बुद्बुदः जलस्फोटः ॥

॥ ५२२ ॥ स्कन्द्यमिभ्यां धः ॥ २. २. १७३ ॥

आभ्यां धप्रत्ययो भवति । स्कन्धः बाहुमूर्धा ॥ अन्धः दृष्टिविकलः ॥

॥ ५२३ ॥ कुवोऽन्धच् ॥ २. २. १७४ ॥

कवतेरन्धच्प्रत्ययोभवति । कबन्ध :छिन्नमूर्धा देहः ॥

॥ ५२४ ॥ नौ स्यतेरधक् ॥ २. २. १७५ ॥

नावुपपदे स्यतेरधक्प्रत्ययो भवति । निषधः जनपदः ॥

॥ ५२५ ॥ मङ्गेर्नलोपश्च ॥ २. २. १७६ ॥

मङ्गेरधक्प्रत्ययो भवति नलोपश्च । मगधः जनपदः ॥

॥ ५२६ ॥ इषेरुधक् ॥ २. २. १७७ ॥

इषेरुधक्प्रत्ययो भवति । इषुधः याच्ञा ॥

॥ ५२७ ॥ धापूवस्यज्यतिसिविभ्यो नः ॥ २. २. १७८ ॥

एभ्यो नप्रत्ययो भवति । धाना भक्ष्यविशेषः ॥ पर्णम् पलाशम् । [illegible] ॥ वेनः राजा ॥ [illegible] वायुः ॥ स्योनं सुखम् ॥

॥ ५२८ ॥ उषिकुषिगृधोणुजिमी[illegible]विभ्यः नित् ॥ २. २. १७९ ॥

[illegible]

कृष्णः वर्णः ॥ इनः स्वामी ॥ जिनः बुद्धः ॥ मीनः मत्स्यः ॥ बुध्नं मूलम् ॥

॥ ५२९ ॥ ब्रधेरं च ॥ २. २. १८० ॥

ब्रधेर्नप्रत्ययः अं चागमो भवति । ब्रध्नः सूर्यः ॥

॥ ५३० ॥ सुवो दीर्घश्च ॥ २. २. १८१ ॥

सुवो नप्रत्ययः दीर्घश्च भवति । सूना वधस्थानम् ॥

॥ ५३१ ॥ कृवृतॄस्यनिभ्यो नित् ॥ २. २. १८२ ॥

कृप्रभृतिभ्यो नप्रत्ययो भवति । कर्णं श्रवणम् ॥ वर्णः शुक्लादि ॥ तर्णः वत्सः ॥ सेना चमूः ॥ अन्नम् अन्धः ॥

॥ ५३२ ॥ रमेस्त च ॥ २. २. १८३ ॥

रमेर्नप्रत्ययः, तश्चान्तादेशो भवति । रत्नं मुक्तादि ॥

॥ ५३३ ॥ रास्नासास्नासुम्नद्युम्ननिम्नशिश्नकृत्स्नाक्ष्ण-श्लक्ष्णाभीक्ष्णतीक्ष्णस्तेनफेनश्येनच्यौत्नादयः ॥ २. २. १८४ ॥

रास्नादयः शब्दाः नप्रत्ययान्ता निपात्यन्ते । रासाभ्यां सुट् च । रास्ना ओषधिः ॥ सास्ना गवां गलचर्म ॥ सुद्युभ्यां मुमागमो डिच्च । सुम्नम् सुखम् ॥ द्युम्नं द्रविणम् ॥ निम्नं नतम् ॥ शीङः शुग्ह्रस्वश्च । शिश्नः शेफः ॥ कृतेः सक् च । कृत्स्नम् सकलम् ॥ अशेः सुट् च । अक्ष्णः खण्डः ॥ श्लिषेश्चोपधायाः । श्लक्ष्णम् अकर्कशम् ॥ अभावीषेः किच्च । अभीक्ष्णम् अजस्रम्॥ तिजेः सुट् दीर्घश्च । तीक्ष्णं शिताग्रम् ॥ स्त्यायेस्तीनः । स्तेनः चोरः ॥ स्फायेः फि च । फेनः डिण्डीरः ॥ श्यायोऽति च । श्येनः पक्षी ॥ च्युन्देः च्युत् वृद्धिश्च । च्यौत्नी कांस्यादिपात्री । आदिग्रहणात् दूनदुरोणरोण्वादयो भवन्ति ॥

॥ ५३४ ॥ श्रुयुरुवृज्यसिरसिरुचिरुहिभ्यो युच् ॥ २. २. १८५ ॥

श्रुप्रभृतिभ्यो युच्प्रत्ययो भवति । श्रवणं कर्णः ॥ यवनाः जनपदः ।

रवणः करभः ॥ वरणः वृक्षः ॥ जयनम् ऊर्णापटः ॥ असनं बीजकम् ॥ रसना जिह्वा ॥ रोचना गोपित्तम् ॥ रोहणः गिरिः ॥

॥ ५३५ ॥ अशो रश च ॥ २. २. १८६ ॥

अश्नोतेर्युच्प्रत्ययः रश चादेशो भवति । रशना मेखला ॥

॥ ५३६ ॥ उन्देर्नलोपश्च ॥ २. २. १८७ ॥

उन्देर्युच्प्रत्ययः नलोपश्च भवति । ओदनं भुक्तम् ॥

॥ ५३७ ॥ रञ्जेर्युन् ॥ २. २. १८८ ॥

रञ्जेर्युन्प्रत्ययो नलोपश्च भवति । रजनी हरिद्रा ॥ महारजनं कुसुम्भम् ॥

॥ ५३८ ॥ भुवः किद्वा ॥ २. २. १८९ ॥

भुवो युन्प्रत्ययः किद्वा भवति । भवनं गृहम् ॥ भुवनं जगत् ॥

॥ ५३९ ॥ कृपॄवृजिनिधाञ्भ्यः क्युः ॥ २. २. १९० ॥

कृप्रभृतिभ्यो क्युप्रत्ययो भवति । किरणः रश्मिः ॥ पुरणं समग्रयिता ॥ वृजनः विवेक्ता ॥ निधनम् अवसानम् ॥

॥ ५४० ॥ हनो जघ च ॥ २. २. १९१ ॥

हन्तेः क्युप्रत्ययो जघ चादेशो भवति । जघनं श्रोणिः ॥

॥ ५४१ ॥ मन्मनगहनगृञ्जनादयः ॥ २. २. १९२ ॥

मन्मनादयः क्युप्रत्ययान्ता निपात्यन्ते । मनेर्मट् च । मन्मनः........ वाग्विकलताविशेषः । गाहो ह्रस्वश्च । गहनं कृच्छावगाहनीयम् ॥ गृजेर्नुं च । गृञ्जनम् अभक्ष्यद्रव्यविशेषः । आदिग्रहणात् काञ्चनाननकाननादयो भवन्ति ॥

॥ ५४२ ॥ हृञविभ्यामिनच् ॥ २. २. १९३ ॥

आभ्यामिनच्प्रत्ययो भवति । हरिणः मृगः ॥ अविनं बलम् ॥

॥ ५४३ ॥ वृजिनाजिनकठिनादयः ॥ २. २. १९४ ॥

वृजिनादयः शब्दाः इनच्प्रत्ययान्ता निपात्यन्ते। वृजेरगुणत्वं च। वृजिनं पापम्॥ अजेर्विभावाभावश्च। अजिनं चर्म॥ कण्ठेर्नलोपश्च। कठिनं अकोमलम्। आदिग्रहणात् ग्रहणादयो भवन्ति॥

॥ ५४४ ॥ द्रुदक्षिभ्यामिनन् ॥ २. २. १९५ ॥

आभ्यामिननप्रत्ययो भवति। द्रविणं द्रव्यम्॥ दक्षिणः अनुकूलः। दक्षिणा दिक्॥

॥ ५४५ ॥ विपिनेरिणतुहिनमहिनादयः ॥ २. २. १९६ ॥

विपिनादयः शब्दाः इननप्रत्ययान्ता निपात्यन्ते। वपेरिश्चोपधायाः। विपिनं वनम्॥ ईरे ह्रस्वश्च। इरिणम् ऊषरः॥ तुहेः गुणाभावश्च। तुहिनं हिमम्॥ महेर्मध्योदात्तत्वं च। महिनः माहात्म्यवान्। आदिग्रहणात् रोहिणादयो भवन्ति॥

॥ ५४६ ॥ खलेरीनच् ॥ २. २. १९७ ॥

खलेरीनच्प्रत्ययो भवति। खलीनं कविकम्॥

॥ ५४७ ॥ पठेर्णित् ॥ २. २. १९८ ॥

पठेरीनच्प्रत्ययः णित् भवति। पाठीनः मत्स्यः॥

॥ ५४८ ॥ अर्त्यजिकृवृतॄधृदारियमिभ्य उनन् ॥ २. २. १९९ ॥

अर्त्यादिभ्य उननप्रत्ययो भवति। अरुणः सूर्यसारथिः॥ वयुनम् विज्ञानम्॥ करुणः रसः। करुणा दया॥ वरुणः प्रचेताः॥ तरुणः युवा॥ धरुणः धर्ता॥ दारुणः उग्रः॥ यमुना नदी॥

॥ ५४९ ॥ लषेः श च ॥ २. २. २०० ॥

लषेरुननप्रत्ययः, शकारश्चान्तादेशो भवति। लशुनम् रसोनम्॥

॥ ५५० ॥ पिशिमिथिभ्यां कित् ॥ २. २. २०१ ॥

आभ्यामुननप्रत्ययः किद्भवति। पिशुनः खलः॥ मिथुनम् द्वन्द्वम्॥

॥ ५५१ ॥ फलेर्गुक् च । २. २. २०२ ॥

फलेरुनन्प्रत्ययो गुक् चागमो भवति । फल्गुनी नक्षत्रम् ॥

॥ ५५२ ॥ अजेस्तृणे चित् ॥ २. २. २०३ ॥

अजेरुनन्प्रत्ययः तृणे चित्, अन्यत्र निद्भवति । अर्जुनम् तृणम् । अर्जुनः पार्थः ॥

॥ ५५३ ॥ शकेरुनः ॥ २. २. २०४ ॥

शकेरुनप्रत्ययो भवती । शकुनः पक्षी ॥

॥ ५५४ ॥ वीपतिभ्यां तनन् ॥ २. २. २०५ ॥

आभ्यां तनन्प्रत्ययो भवति । वेतनं भृतिः ॥ पत्तनं नगरम् ॥

॥ ५५५ ॥ पृपूभ्यां कित् ॥ २. २. २०६ ॥

आभ्यां तनन्प्रत्ययः किद्भवति । पृतना सेना ॥ पूतना राक्षसी ॥

॥ ५५६ ॥ अलितलिशीङ्सृपाभ्यः पः ॥ २. २. २०७ ॥

अल्यादिभ्यः पप्रत्ययो भवति । अल्पं स्तोकम् ॥ तल्पम् शयनीयम् ॥ शेपः पुच्छम् ॥ सर्पः···· ॥ पापं कल्माषम् ॥

॥ ५५७ ॥ कृभृकुसुस्तुयुरूणां पन्नू च ॥ २. २. २०८ ॥

कृप्रभृतिभ्यः पन्प्रत्ययः, ऊकारश्चैषामन्तादेशो भवति । कूर्पं भ्रूमध्यम् ॥ शूर्पं परिवपनम् ॥ कूपः प्रहिः ॥ सूपः व्यञ्जनम् ॥ स्तूपः निचयम् ॥ यूपः यज्ञाङ्गम् ॥ रूपं चक्षुर्विषयः ॥

॥ ५५८ ॥ बाष्पशष्पनिवेष्पशिल्पक्षुपनीपचम्पा-
शम्पादयः ॥ २. २. २०९ ॥

बाष्पादयः शब्दाः पन्प्रत्ययान्ता निपात्यन्ते । पातेः षट् च । बाष्पम् अश्रु ॥ शदेः षश्च । शष्पम् बालतृणम् ॥ नौ विशेः षश्च । निवेष्पं । अपां गर्भः ॥ शीलः शिल् च । शिल्पम् विज्ञानम् ॥ क्षुनीपोर्गुणाभावश्च । क्षुपः

गुल्मम् ॥ नीपः वृक्षविशेषः ॥ चमशिमोर्णिश्च । चम्पा नगरी ॥ शम्पा विद्युत् । आदिग्रहणात् पम्पापेपादयो भवन्ति ॥

॥ ५५९ ॥ उषिकुषिकुटिदलिकुलिखजिभ्यः कपन् ॥ २. २. २१० ॥

उषिप्रभृतिभ्यः कपन्प्रत्ययो भवति । उषपः सूर्यः ॥ कुषपः विन्ध्यः ॥ कुटपः प्रस्थचतुर्भागः ॥ दलपः विदलम् ॥ कुलपः शाखपर्णम् ॥ खजपः घृतमन्थः ॥

॥ ५६० ॥ सर्तेरपष्षुक् च ॥ २. २. २११ ॥

सर्तेर्धातेरपप्रत्ययः षुक् चास्यागमो भवति । सर्षपम् सिद्धार्थम् ॥

॥ ५६१ ॥ विटपविष्टपोलपकुणपकुतपचातपशिंशपादयः ॥ २. २. २१२ ॥

विटपादयः शब्दाः अपप्रत्ययान्ता निपात्यन्ते । विटेर्गुणाभावश्च । विटपः शाखा ॥ विशेस्तुट् च । विष्टपं जगत् ॥ वलेरुल च । उलपम् तृणविशेषः ॥ कुणेरगुणत्वम् । कुणपः मृतकम् ॥ कौनेस्तुट् च । कुतपः शाटलोमकम्बलम् ॥ चायतेस्तुक् । चातपः मुनिः ॥ शासेः शोऽत इट् च । शिंशपा वृक्षविशेषः । आदिग्रहणात् खरपादयो भवन्ति ॥

॥ ५६२ ॥ विशेरिपक् ॥ २. २. २१३ ॥

विशेरिपक्प्रत्ययो भवति । विशिपं वेश्म ॥

॥ ५६३ ॥ दलेरीपः दिल् च ॥ २. २. २१४ ॥

दलेरीपप्रत्ययः दिलादेशश्च भवति । दिलीपः राजा ॥

॥ ५६४ ॥ आडेरुपगुञ्चोपधायाः ॥ २. २. २१५ ॥

आडेरुपक्प्रत्ययः उपधायाश्चोकारादेशो भवति । उडुपं प्लवः ॥

॥ ५६५ ॥ अशेरूपच् पश्च ॥ २. २. २१६ ॥

अशेरूपच्प्रत्ययः पकारश्चान्तादेशो भवति । अपूपः भक्ष्यान्नविशेषः ॥

॥ ५६६ ॥ गुरेः फग्लश्च ॥ २. २. २१७ ॥

गुरेः फक्प्रत्ययः लश्चान्तादेशो भवति । गुल्फं जङ्घास्थिसन्धिः ॥

॥ ५६७ ॥ शिफाशफकफादयः ॥ २. २. २१८ ॥

शिफादयः शब्दाः फक्प्रत्ययान्ता निपात्यन्ते । श्यतेरित्वं च शिफा वृक्षजटा ॥ ह्रस्वश्च । शफं खुरः ॥ कायतेश्च । कफम् श्लेष्म आदिग्रहणात् इफानफासुनफादयो भवन्ति ॥

॥ ५६८ ॥ नितमिशमिभ्यां बः ॥ २. २. २१९ ॥

निपूर्वात्तमेः शमेश्च बप्रत्ययो भवति । नितम्बः श्रोणिः ॥ शम्ब वज्रम् ॥

॥ ५६९ ॥ अमेर्णिद्वा ॥ २. २. २२० ॥

अमेर्बप्रत्ययो णिद्वा भवति । अम्बा माता ॥ अम्बः अपह्नवः ॥

॥ ५७० ॥ अलशलोरत उच्च ॥ २. २. २२१ ॥

आभ्यां बप्रत्ययः अकारस्य चोकारादेशो भवति । उल्बम् गर्भवेष्टनम् । शुल्बम् ताम्रम् ॥

॥ ५७१ ॥ निम्बबिम्बडिम्बहिडिम्बस्तम्बसाम्बादयः ॥ २. २. २२२ ॥

निम्बादयः शब्दाः बप्रत्ययान्ता निपात्यन्ते । नियो ह्रस्वश्च । निम्ब वृक्षविशेषः ॥ बन्धेर्धलोप इदतः । बिम्बं प्रतिच्छन्दकम् ॥ डीङो नुं ह्रस्व हिट् च वा । डिम्बः व्यसनम् ॥ हिडिम्बः राक्षसः ॥ स्तम्बेः लोपश्च । स्तम्ब गोटः ॥ स्यतेर्नुं च । साम्बः जाम्बवनेयः । आदिग्रहणात् कशाम्बादयं भवन्ति ॥

॥ ५७२ ॥ कृकदिकडिभ्योऽम्बच् ॥ २. २. २२३ ॥

कृकदिकडिभ्योऽम्बच्प्रत्ययो भवति । करम्बः दध्योदनः ॥ कदम्ब पक्वान्नविशेषः ॥ कडम्बः जातिविशेषः ॥

॥ ५७३ ॥ कदेर्णित् पक्षिणि ॥ २. २. २२४ ॥

कदेरम्बच्प्रत्ययः पक्षिविषये णिदन्यत्राणिद्भवति । कादम्बः हंसः ॥ कदम्बः वृक्षः ॥

॥ ५७४ ॥ निकुरिकुटिभ्यामुम्बक् ॥ २. २. २२५ ॥

आभ्यामुम्बक्प्रत्ययो भवति । निकुरुम्बं समूहः ॥ कुटुम्बम् दारादयः ॥

॥ ५७५ ॥ दृदलिभ्यां भः ॥ २. २. २२६ ॥

आभ्यां भप्रत्ययो भवति । दर्भः कुशः ॥ दल्भः ऋषिः ॥

॥ ५७६ ॥ गिरो भन् ॥ २. २. २२७ ॥

गिरतेर्भन्प्रत्ययो भवति । गर्भः प्रसवः ॥

॥ ५७७ ॥ इणः कित् ॥ २. २. २२८ ॥

इणो भन्प्रत्ययः किद्भवति । इभः हस्ती ॥

॥ ५७८ ॥ कृशॄवलिवल्लिरासिगर्दिभ्योऽभच् ॥ २. २. २२९ ॥

कॄंप्रभृतिभ्योऽभच्प्रत्ययो भवति । करभः उष्ट्रः ॥ शरभः श्वापद-विशेषः ॥ वलभिः वेश्माग्रभूमिकः ॥ वल्लभः अभीष्टः ॥ रासभः खरः ॥ गर्दभः स एव ॥

॥ ५७९ ॥ सनेर्डित् ॥ २. २. २३० ॥

सनेरभच्प्रत्ययो डित् भवति । सभा परिषत् ॥

॥ ५८० ॥ ऋषिवृषिभ्यां कित् ॥ २. २. २३१ ॥

आभ्यामभच्प्रत्ययः किद्भवति । ऋषभः पुङ्गवः ॥ वृषभः स एव ॥

॥ ५८१ ॥ कृञोऽम्भच् ॥ २. २. २३२ ॥

करोतेरम्भच्प्रत्ययो भवति । करम्भाः दधिसक्तवः ॥

॥ ५८२ ॥ सेरिभज्ञट् च ॥ २. २. २३३ ॥

सिनोतेरिभच्प्रत्ययः रट्चास्य भवति । सेरिभः महिषः ॥

॥ ५८३ ॥ टिकेष्टस्तुट् च ॥ २. २. २३४ ॥

टिकेरिभच्प्रत्ययः टकारश्चान्तादेशः तुट्चागमो भवति । टिट्टिभः पक्षी ॥

॥ ५८४ ॥ ककेरुभः ॥ २. २. २३५ ॥

ककेरुभप्रत्ययो भवति । ककुभः अर्जुनः ॥

॥ ५८५ ॥ कुकेः कुक् च ॥ २. २. २३६ ॥

कुकेरुभप्रत्ययो भवति, कुक्चागमश्च । कुक्कुभः पक्षिविशेषः ॥

॥ ५८६ ॥ दमेर्डो डुण्डुक् च ॥ २. २. २३७ ॥

दमेरुभप्रत्ययः दकारस्य डुकारादेशः डुगागमो भवति । डुण्डुभः निर्विषाहिः ॥

॥ ५८७ ॥ क उम्भक् ॥ २. २. २३८ ॥

कायतेरुम्भक्प्रत्ययो भवति । कुम्भः घटः ॥

॥ ५८८ ॥ कसेरुच्चातः ॥ २. २. २३९ ॥

कसेरुम्भक्प्रत्ययः, अकारस्य चोकारादेशो भवति । कुसुभः महारजतम् ॥

॥ ५८९ ॥ अर्तीरिस्तुसुहुधृक्षियक्षिव्याभायापदिशॄनीभ्यो मन् ॥ २. २. २४० ॥

अर्त्यादिभ्यो मन्प्रत्ययो भवति । अर्म अक्षिरोगः ॥ ईर्म व्रणः ॥ स्तोमः समूहः ॥ सोमः चन्द्रमाः ॥ होमः आहुतिः ॥ धर्मः सत्कर्म ॥ क्षेमः कल्याणम् ॥ यक्ष्म व्याधिः ॥ व्यामः वक्षोभुजायतिः ॥ भामः क्रोधः ॥ यामः प्रहरः ॥ पद्मं कमलम् ॥ शर्म नदः ॥ नेमः अर्धम् ॥

॥ ५९० ॥ ग्रसेरा च ॥ २. २. २४१ ॥

ग्रसेर्मन्प्रत्ययः आकारश्चान्तादेशो भवति । ग्रामः समूहादि ॥

॥ ५९१ ॥ स्यविसिविशुषिक्षुभ्यः कित् ॥ २. २. २४२ ॥

सिनोत्यादिभ्यो मनूप्रत्ययः किद्भवति । सीम सर्वनाम ॥ ऊमः जनः ॥ स्यूमः सूत्रतन्तुः ॥ शुष्मः बलम् ॥ क्षुमा अतसी ॥

॥ ५९२ ॥ गुलिविलिभिलिसिधीन्धिधूञ्श्याहिरुभ्यो मक् ॥ २. २. २४३ ॥

गुलिप्रभृतिभ्यो मक्प्रत्ययो भवति । गुल्मः सेनाङ्गम् ॥ विल्मः प्रकाशः ॥ भिल्मम् भास्वरम् ॥ सिध्मम्.........न्यग्रोधः ॥ इध्मम् इन्धनम् ॥ धूमः अग्निकेतुः ॥ श्यामः वर्णः ॥ हिमं तुहिनम् ॥ रुमा लवणाकरः ॥

॥ ५९३ ॥ तिजियुजिरुचाम् कु च ॥ २. २. २४४ ॥

तिजिप्रभृतिभ्यो मक्प्रत्ययोऽन्तस्य कवर्गादेशो भवति । तिग्मम् तीक्ष्णम् ॥ युग्मम् युगलम् ॥ रुक्मम् सुवर्णम् ॥

॥ ५९४ ॥ अवतेर्ह्रस्वश्च ॥ २. २. २४५ ॥

अवतेर्मक्प्रत्ययः, ऊठो ह्रस्वश्च भवति । उमा गौरी ॥

॥ ५९५ ॥ भियः षुग्वा ॥ २. २. २४६ ॥

भियो मक्प्रत्ययः षुगागमश्च वा भवति । बिभ्यत्यस्मादिति भीष्मः भयानकः ॥ भीमः स एव ॥

॥ ५९६ ॥ ग्रीष्मघर्मकूर्मसूर्मसुह्मजाल्मादयः ॥ २. २. २४७ ॥

ग्रीष्मादयः शब्दाः मक्प्रत्ययान्ता निपात्यन्ते । ग्रसेरीत्वातः षत्वं च । ग्रीष्मः ऋतुः ॥ घातेर्गुणश्च । घर्मः निदाघः ॥ करोतेरुः दीर्घश्च । कूर्मः कच्छपः ॥ सूरेर्णिश्च । सूर्मः चुल्ली ॥ सहेरत उच्च । सुह्माः जनपदः ॥ जहातेर्जिह्म । जिह्मः जडः ॥ जलेर्डिच्च । जाल्मः असमीक्ष्यकारी । आदिग्रहणात् अश्माश्मसूक्ष्मादयो भवन्ति ॥

॥ ५९७ ॥ प्रथिचरिकलिकर्दिपृसृभ्योऽमच् ॥ २. २. २४८ ॥

प्रथ्यादिभ्योऽमच्प्रत्ययो भवति । प्रथमः चरमः पश्चिमः ॥ कलमः शाली ॥ कर्दमः पङ्कः ॥ परमः उत्कृष्टः ॥ सरमा देवशुनी ॥

॥ ५९८ ॥ अवेर्धश्च वा ॥ २. २. २४९ ॥

अवेरमच्प्रत्ययो धकारश्चान्तादेशो वा भवति । अधमः हीनः अवमः स एव ॥

॥ ५९९ ॥ दाणो डिमच् ॥ २. २. २५० ॥

दाणो डिमच्प्रत्ययो भवति । दाडिमः दाडिमी वा वृक्षविशेषः ॥

॥ ६०० ॥ डिमेः कित् ॥ २. २. २५१ ॥

डिमेः डिमच्प्रत्ययः किद्भवति । डिण्डिमः वाद्यविशेषः ॥

॥ ६०१ ॥ कुथेरुमक् ॥ २. २. २५२ ॥

कुथेरुमक्प्रत्ययो भवति । कुथुमं मृगाजिनम् ॥

॥ ६०२ ॥ कसेरुच्चातः ॥ २. २. २५३ ॥

कसेरुमक्प्रत्ययः, अकारस्य चोकारादेशो भवति । कुसुमम् पुष्पम् ॥

॥ ६०३ ॥ कुदकुकोर्नुं च ॥ २. २. २५४ ॥

आभ्यामुमक्प्रत्ययः नुं चागमो भवति । कुन्दुमः निचयः ॥ कुङ्कुमः घुसृणम् ॥

॥ ६०४ ॥ गुधेरूमः ॥ २. २. २५५ ॥

गुधेरूमप्रत्ययो भवति । गोधूमः धान्यविशेषः ॥

इति श्रीदण्डनाथनारायणभट्टविरचितायां सरस्वतीकण्ठाभरणस्य वृत्तौ सहृदयहारिण्यां द्वितीयस्याध्यायस्य द्वितीयः पादः ॥



ॐ

## ॥ तृतीयः पादः ॥

---

### ॥ ६०५ ॥ माच्छासाशलिकलिवलिससिसविकनिमनि-बन्धिभ्यो यः ॥ २. ३. १ ॥

एभ्यो यप्रत्ययो भवति। माया छद्म॥ छाया कान्तिः॥ सायं दिनावसानम्॥ शल्यम् अन्तर्गतं लोहादि॥ कल्यः नीरोगः॥ वल्यः कटकुसूलम्॥ सस्यं क्षेत्रस्थं गोधूमादि॥ सव्यं वामम्॥ कन्या कुमारी॥ मन्या धमनी॥ वन्ध्या अप्रसूता॥

### ॥ ६०६ ॥ सञ्जेर्धश्च ॥ २. ३. २ ॥

सञ्जेः यप्रत्ययः धश्चान्तादेशो भवति। सन्ध्या उषा॥

### ॥ ६०७ ॥ जनिजापुणिकृतिभ्यः क्यप् ॥ २. ३. ३ ॥

एभ्यः क्यप्प्रत्ययो भवति। जन्यं सङ्ग्रामः॥ जाया पत्नी॥ पुण्यं सत्कर्म॥ कृत्या दुर्गा॥

### ॥ ६०८ ॥ मध्यविन्ध्यशिक्यान्यपर्जन्यवदान्याघ्न्याहर्म्य-धिष्ण्यवस्त्यागस्त्यपुलस्त्यापत्यसत्यकुड्यकुल्या-हल्यादयः ॥ २. ३. ४ ॥

मध्यादयः शब्दाः क्यप्प्रत्ययान्ता निपात्यन्ते। मथेर्धश्च। मध्यं गर्भः॥ विधेर्नुं च। विन्ध्यं गिरिः॥ श्यतेरिकुट् च। शिक्यं लम्बमानविकर्या-धाधारः॥ अनेर्निच्च। अन्यः सर्वनाम॥ प्रो जट् च। पर्जन्यः मेघः॥ वदेरानुट् च। वदान्यः त्यागी॥ नञि हनेर्लोपश्चोपधायाः। अघ्न्या गौः॥ हृञो मुट् च। हर्म्यम् सौधम्॥ धृषेर्नु धिष च। धिष्ण्यम् भवनम्॥ वसेरादि-वत्वं नुट् च॥ वस्त्यं गृहम्॥ स्तम्बेरगपुलयोर्डिच्च। अगस्त्यः॥ पुलस्त्यः

मुनिः ॥ नञि पतेः करणे । अपत्यं पुत्रादि ॥ अस्तेः सट् च । सत्य अमृषा । कुलेः कित् इश्च वा ॥ कुड्यम् भित्तिः ॥ कुल्या सरणी ॥ हलेर्नञि अहल्य गौतमपत्नी । आदिग्रहणात् कम्यद्रुवसन्नादयो भवन्ति ॥

॥ ६०९ ॥ तनिमलिवलिभ्योऽयन् ॥ २. ३. ५ ॥

तन्यादिभ्योऽयन्प्रत्ययो भवति । तनयः पुत्रः ॥ मलयः पर्वतः । वलयः कटकम् ॥

॥ ६१० ॥ हृञो दुक् किच्च ॥ २. ३. ६ ॥

हरतेरयन्प्रत्ययः, कित् दुगागमो भवति । हृदयं मनः ॥

॥ ६११ ॥ किसलयगयगवयमुकयकेकयादयः ॥ २. ३. ७ ।

किसलयादयः शब्दाः अयन्प्रत्ययान्ता निपात्यन्ते । कसेरलङ्किच्चेपधायाः किसलयं प्रवालम् ॥ गमेर्डिच्च । गयः प्राणः । गया तीर्थम् ॥ गवोऽन्तोदात्तत्वं च गवयः गवाकृतिः पशुविशेषः ॥ मुतेः कत्वं गुणाभावश्च । मुकयः मृगजातिः । कितः कश्च । केकयः क्षत्रियः । आदिग्रहणात् सङ्कणादयो [?] भवन्ति ॥

॥ ६१२ ॥ कषिकुलिलुलिकलिभ्य आयक् ॥ २. ३. ८ ॥

कष्यादिभ्यः आयक्प्रत्ययो भवति ॥ कषायः कल्कादि ॥ कुलायः नीडम् ॥ लुलायः महिषः ॥ कलायः त्रिपुटम् ॥

॥ ६१३ ॥ श्रुदक्षिस्पृहिभ्य आय्यः ॥ २. ३. ९ ॥

एभ्यः आय्यप्रत्ययो भवति । श्रवाय्यः श्रोता ॥ दक्षाय्यः दक्षिता ॥ *स्पृहयाय्यः स्पृहयालुः ॥*

॥ ६१४ ॥ दधेश्च सुञो डित् ॥ २. ३. १० ॥

सुनोतेर्दध्युपपदे आय्यप्रत्ययः डिद्भवति । दधिषाय्यम् ॥

॥ ६१५ ॥ कौतेरियः ॥ २. ३. ११ ॥

कौतेरियप्रत्ययो भवति । कवियं खलीनम् ॥

॥ ६१६ ॥ कृञः क्रित् ॥ २. ३. १२ ॥

करोतेरियप्रत्ययः किद्भवति । क्रियः मेषः ॥

॥ ६१७ ॥ मृजेर्ज्लीयर् ॥ २. ३. १३ ॥

मृजेर्ज्लीयर्प्रत्ययो भवति । मार्जालीयः वैष्ण्योऽग्निः ॥

॥ ६१८ ॥ वियस्तुट् च ॥ २. ३. १४ ॥

वेतेर्ज्लीयर्प्रत्ययः तुट् चागमो भवति । वैतालीयम् छन्दोजातिः ॥

॥ ६१९ ॥ मदेः स्यन् ॥ २. ३. १५ ॥

मदेः स्यन्प्रत्ययो भवति । मत्स्यः मीनः ॥

॥ ६२० ॥ कचिभुजिभ्यामिक् च ॥ २. ३. १६ ॥

आभ्यां स्यन्प्रत्ययः इक् चागमो भवति । कचिष्यः वल्लभः ॥ भुजिष्यः दासः । इको विधानसामर्थ्याद्गुणो न भवति ॥

॥ ६२१ ॥ वचेरथ्यक् तश्च ॥ २. ३. १७ ॥

वचेरथ्यक्प्रत्ययः तकारश्चान्तादेशो भवति । उतथ्यः मुनिः ॥

॥ ६२२ ॥ वृङ एन्यः ॥ २. ३. १८ ॥

वृङः एन्यप्रत्ययो भवति । वरेण्यः श्रेयान् ॥

॥ ६२३ ॥ अर्तेरन्यत् ॥ २. ३. १९ ॥

अर्तेरन्यत्प्रत्ययो भवति । अरण्यं वनम् ॥

॥ ६२४ ॥ हृञ इच्च ॥ २. ३. २० ॥

हृञोऽन्यत्प्रत्ययः इकारश्चान्तादेशो भवति । हिरण्यं सुवर्णादिद्रव्यम् ॥

॥ ६२५ ॥ स्फायितञ्चिवञ्चिशकिरिपिक्षिपिक्षुदिसृपितृपिवन्धुन्दिश्चितिवृत्यजिनीपदिमदिमुदिरुदिछिदिभन्दिमन्दिचन्दिदसिदहिहसिघसिदभिवसिशुचिशुभिभ्यो रक् ॥ २. ३. २१ ॥

स्फाय्यादिभ्यो रक्प्रत्ययो भवति। स्फारम् उल्बणम्॥ तक्रम् उदश्वित्॥ वक्रं कुटिलम्॥ शक्रः इन्द्रः॥ रिप्रम् कुत्सितम्॥ क्षिप्रं शीघ्रम्॥ क्षुद्रम् अणीयः॥ सुप्रा नदी॥ तृप्रं मेघान्तघर्मः॥ वन्द्रः समूहः॥ समुद्रः जलधिः॥ श्वित्रं कुष्ठबिन्दुः॥ वृत्रः असुरः॥ वीरः विक्रान्तः॥ नीरं जलम्॥ पद्रः ग्रामः॥ मद्रः क्षत्त्रियः॥ मुद्रा चिह्नकरणम्॥ रुद्रः शम्भुः॥ छिद्रम् विवरम्॥ भद्रं कल्याणम्॥ मन्द्रं गम्भीरम्॥ चन्द्रः शशी॥ दस्रौ अश्विनौ॥ दह्रः अग्निः॥ हस्रः हर्षुलः॥ घस्रः दिवसः॥ दभ्रः अल्पः॥ उस्रः रश्मिः॥ शुक्रं रेतः॥ शुभ्रम् अवदातम्॥

॥ ६२६ ॥ चकिरम्योरुच्चोपधायाः ॥ २. ३. २२ ॥

आभ्यां रक्प्रत्ययः उपधायाश्चोकारादेशो भवति॥ चुक्रं ··· ···[पेय] रसविशेषः॥ रुम्रं सुन्दरम्॥

॥ ६२७ ॥ वौ कसेः ॥ २. ३. २३ ॥

कसेर्वावुपपदे रक्प्रत्ययः उपधायाश्चोत्वं भवति। विकुस्रः चन्द्रमाः॥

॥ ६२८ ॥ शदेरू च ॥ २. ३. २४ ॥

शदे रक्प्रत्ययः उपधाया ऊ च भवति। शूद्रः चतुर्थो वर्णः॥

॥ ६२९ ॥ स्थश्च ॥ २. ३. २५ ॥

तिष्ठतेः रक्प्रत्ययः ऊ चान्तादेशो भवति। स्थूरा कुष्ठिका॥

॥ ६३० ॥ तम्यम्यर्दिजोनां दीर्घश्च ॥ २. ३. २६ ॥

तम्यादिभ्यो रक्प्रत्ययो भवति। एषां दीर्घश्च। ताम्रः वर्णः॥ आम्रः वृक्षः॥ आर्द्रम् सरसम्॥ जीरम् अजाजी रत्नेन जीर्णं चर्मपुटम् [?]॥

॥ ६३१ ॥ दुरीणो लोपश्च ॥ २. ३. २७ ॥

इणो दुर्युपपदे रक्प्रत्ययो लोपश्च वा भवति। दूरं विप्रकृष्टम्॥

॥ ६३२ ॥ कृतेः कूच्छौ च ॥ २. ३. २८ ॥

करोतेः रक्प्रत्ययः कूच्छौ चादेशौ भवतः । क्रूरं निष्ठुरम् ॥ कृच्छ्रम् कष्टम् ॥

॥ ६३३ ॥ वृधिरुधिवपीन्दिवज्यगिभीण्भ्यो रन् ॥ २. ३. २९ ॥

वृध्यादिभ्यो रन्प्रत्ययो भवति । वर्ध्रं चर्म ॥ रोध्रः वृक्षविशेषः । वप्रः केदारः ॥ इन्द्रः देवराट् ॥ वज्रं कुलिशम् ॥ अग्रं प्राग्भागः ॥ भेरः भीरुः ॥ एरः एरकम् ॥

॥ ६३४ ॥ अन्ध्ररन्ध्रसिलिन्ध्रोढ्रपुण्ड्रतीव्रनीव्र-शीघ्रोग्रगौराभद्रसान्द्रगुन्द्रादयः ॥ २. ३. ३० ॥

अन्ध्रादयः शब्दाः रन्प्रत्ययान्ता निपात्यन्ते । अहेर्धश्च । अन्ध्रः क्षत्त्रियजातिः ॥ रधेर्नुं च । रन्ध्रं च्छिद्रम् ॥ इन्धेः सिलिट् च । सिलिन्ध्रम् उद्भिद्विशेषः ॥ उणेर्ढश्च । ओढ्रः क्षत्रजातिः ॥ पुणेर्डश्च । पुण्ड्रः क्षत्रजातिः ॥ तितेर्वो दीर्घश्च । तीव्रः तीक्ष्णः ॥ नियो वुक् च । नीव्रं गृहच्छदिरुपान्तः ॥ श्येङः प्रसारणं घश्च । शीघ्रं त्वरितम् ॥ उषेर्गः किच्च । उग्रः रौद्रः ॥ गुवो वृद्धिश्च । गौरः अवदातः ॥ इणः किच्च । इरा माननीयः पानविशेषः ॥ भन्देर्नलोपश्च । भद्रं कल्याणम् ॥ सदेर्नुं वृद्धिश्च । सान्द्रं घनम् ॥ गुदेर्नुं च । गुन्द्रः जलतृणविशेषः । आदिग्रहणात् श्वभ्रादयो भवन्ति ॥

॥ ६३५ ॥ सुसूधागृधिभ्यः क्रन् ॥ २. ३. ३१ ॥

सुप्रभृतिभ्यः क्रन्प्रत्ययो भवति । सुराः देवाः । सुरा मदिरा ॥ सूरः सूर्यः ॥ धीरः अनाकुलः ॥ गृध्रः काकः ॥

॥ ६३६ ॥ शुसिचिमिभ्यो दीर्घश्च ॥ २. ३. ३२ ॥

शुप्रभृतिभ्यः क्रन्प्रत्ययः दीर्घश्चैषां भवति । शूरः विक्रान्तः ॥ सीरम् हलः ॥ चीरं जीर्णवासः ॥ मीरा सीमान्तः ॥

॥ ६३७ ॥ वाविन्धेः ॥ २. ३. ३३ ॥

इन्धेर्वावुपपदे कन्प्रत्ययो भवति । विन्ध्रं निर्मलम् ॥

॥ ६३८ ॥ ऋच्छेररः ॥ २. ३. ३४ ॥

ऋच्छेररप्रत्ययो भवति । ऋच्छरः त्वरावान् ॥

॥ ६३९ ॥ कृगॄघृजॄझॄदॄबॄभॄमॄभ्यः सघात्त्वादिष्टित् ॥ २. ३. ३५ ॥

कृप्रभृतिभ्योऽरप्रत्ययः, धात्वादिभूतैः कादिभिः सह टिद्भवति । एतेन क्रियादिभ्यः कर घर इत्यादयः प्रत्यया भवन्ति इत्युक्तं भवति । कर्करः क्षुद्राश्मा । कर्करी वर्धनिका ॥ गर्गरः राजर्षिः । गर्गरी महाकुम्भः ॥ घर्घरः सघोषोऽव्यक्तवाक् । घर्घरी किङ्किणीका ॥ जर्जरः अदृढः। जर्जरी स्त्री ॥ झर्झरः वाद्यविशेषः । झर्झरी झल्लरिका ॥ दर्दरः वाद्यविशेषः । दर्दरी सम्यल्लुनी ॥ बर्बरः म्लेच्छजातिः । बर्बरी केशविशेषः ॥ भर्भरः च्छद्मवान् । भर्भरी स्त्री ॥ मर्मरः शुष्कपत्रप्रकरः । बहुलाधिकारात् मर्मरायां दूर्वायां इत्यादौ टित्त्वेऽपि ङीप् न भवति ।

॥ ६४० ॥ मुदेर्गुक् च ॥ २. ३. ३६ ॥

मुदेररप्रत्ययः, टित् गुक् चागमो भवति । मुद्गरम् प्रहरणविशेषः । मुद्गरी स्त्री ॥

॥ ६४१ गुरेर्जक् च ॥ २. ३. ३७ ॥

गुरेररप्रत्ययष्टित् जक् चागमो भवति । गुर्जरः सौराष्ट्रादिः । गुर्जरी स्त्री ॥

॥ ६४२ ॥ सुन्दिकन्दिमन्दिमन्थिमञ्जिपञ्जिपिञ्जभ्रमिचमिचटिवठिमठिदेवित्राभिकास्यर्तिकुटिकचिशिबिदम्भि-कदिवदिभ्यो नित् ॥ २. ३. ३८ ॥

सुन्द्यादिभ्योऽरप्रत्ययो निद्भवति । सुन्दरः मनोज्ञः ॥ कन्दरः गिरिगर्तः ॥ मन्दरः शैलः ॥ मन्थरः मन्दः ॥ मञ्जरी अग्रादिशिखा । गौरादित्वान्ङीष् ॥ पञ्जरः शुकाद्यवरोधसद्म ॥ पिञ्जरः पिङ्गलः ॥

भ्रमरः षट्पदः ॥ चमरः अरण्यपशुः ॥ चटरः मधुकन्धरा ॥ बठरः मूर्खः ॥ मठरः मुनिः ॥ देवरः पत्यनुजः ॥ वासरः दिवसः ॥ कासरः महिषः ॥ अररं कवाटम् ॥ कोटरं च्छिद्रम् । बहुलवचनाद्गुणः ॥ कबरः वर्णः । कबरी वेणी ॥ शबरः पुलिन्दः ॥ दवरः गुणः ॥ कदरः वृक्षविशेषः ॥ बदरी फलवृक्षः ॥

॥ ६४३ ॥ जठरपिठरकुररककरमकरशिग्ग्रशेखरोदरडहरकुहरकूर्परकर्परशफरडमरडामरपामरसागरतोमराजगरादयः ॥ २. ३. ३९ ॥

जठरादयः शब्दा अरप्रत्ययान्ता निपात्यन्ते । जनेष्ठश्च । जठरम् कोष्ठम् ॥ पिठिकुरोरगुणत्वं च । पिठरं भाण्डम् ॥ कुररः पक्षिविशेषः ॥ क्रमेः कश्च । ककरः गौरतित्तिरिः ॥ मकेर्नलोपश्च । मकरः ग्राहः ॥ शाखेरिदेतौ चोपधायाः । शिखरम् अग्रभागः ॥ शेखरः आपीडः ॥ उन्देर्नलोपश्च । उदरं जठरम् ॥ वहेरादेर्डश्च । डहरं हृत्कमलम् ॥ कहेरगुणत्वं च । कुहरं गभीरगर्तः ।। कृपेरुपधाया उच्च वा । कूर्परः कफोणी ॥ कर्परं दटालम् ॥ शेफः पश्च । शफरः क्षुद्रमत्स्यः ॥ दमेर्णिद्वा आदेश्च डः । डमरः भयानकः ॥ डामरः स एव ॥ पातेर्मुट् च । पामरः ग्रामीणः ॥ सहेर्गश्च ॥ सगरः राजा ॥ तङ्गेर्नलोपश्च ॥ तगरः वृक्षविशेषः ॥ तुवो मुट् च । तोमरम् आयुधम् ॥ अजेरगट् च । अजगरः सर्पः । आदिग्रहणात् सागरादयो भवन्ति ॥

॥ ६४४ ॥ अग्यङ्गिमन्दिमदिकडिकासिभ्य आरन् ॥ २. ३. ४० ॥

अगिप्रभृतिभ्यः आरन्प्रत्ययो भवति । अगारं वेश्म ॥ अङ्गारः अग्न्युच्छिष्टम् ॥ मन्दारः वृक्षविशेषः ॥ मदारः वराहः ॥ कडारः पिङ्गलः ॥ कासारः पल्वलम् ॥

॥ ६४५ ॥ किञ्जिमृजिभ्यां चित् ॥ २. ३. ४१ ॥

आभ्यामारन्प्रत्ययः चिद्भवति । कञ्जारः कुमूलः ॥ मार्जारः बिडालः ॥

॥ ६४६ ॥ कृञो मुट् च ॥ २. ३. ४२ ॥

करोतेरारन्प्रत्ययः चित् मुट् चागमो भवति । कर्मारः लोहकारः ॥

॥ ६४७ ॥ तुषिकुठिभ्यां किच्च ॥ २. ३. ४३ ॥

आभ्यामारप्रत्ययश्चित् किच्च भवति । तुषारः हिमम् ॥ कुठारः परशुः ॥

॥ ६४८ ॥ कमेरत उच्च ॥ २. ३. ४४ ॥

कमेरारन्प्रत्ययः कित्, कम्यकारस्य चोकारादेशो भवति । कुमारः पोगण्डः ॥

॥ ६४९ ॥ शृङ्गारभृङ्गारकल्हारकान्तारकेदारकोविदार-कर्बुदारकाञ्चनारादयः ॥ २. ३. ४५ ॥

शृङ्गारादयः शब्दाः आरन्प्रत्ययान्ता निपात्यन्ते । श्रिञः संप्रसारणं गुग्नुमौ च । शृङ्गारः रसविशेषः ॥ भृञो गुणत्वं गुग्नुमौ च । भृङ्गारः कटकः ॥ कलेर्हृट् च । कल्हारम् उत्पलविशेषः ॥ कमेस्तट् दीर्घश्च । कान्तारम् अरण्यम् ॥ कदेरे चोपधायाः । केदारं वप्रम् ॥ कनेः कोविद-कर्बुदकाञ्चनाश्च । कोविदारः वृक्षविशेषः ॥ कर्बुदारः तद्भेदः ॥ काञ्चनारः तद्भेदः स एव । आदिग्रहणात् ईनारमसारादयो भवन्ति ॥

॥ ६५० ॥ इषिरुचिरुधितिमिमिहिमदिमन्दिचन्दिखदि-बधिभ्यः किरच् ॥ २. ३. ४६ ॥

इष्यादिभ्यः किरच्प्रत्ययो भवति । इषिरा क्षिप्रम् ॥ रुचिरं मनोहरम् ॥ रुधिरं लोहितम् ॥ तिमिरम् अन्धकारः ॥ मिहिरः सूर्यः ॥ मदिरा सुरा ॥ मन्दिरं वेश्म ॥ चन्दिरं चन्द्रिकावत् ॥ खदिरः वृक्षविशेषः ॥ बधिरः श्रोत्रविकलः ॥

॥ ६५१ ॥ स्थिरस्फिराजिरशिशिरशिथिरस्थविरकविराशिर-शिबिरसरिरादयः ॥ २. ३. ४७ ॥

स्थिरादयः शब्दाः किरच्प्रत्ययान्ता निपात्यन्ते। स्थो निच्च। स्थिरः अचलः॥ स्फायो डित्। स्फिरः स्फारः॥ अजेर्वीभावाभावः। अजिरं अङ्गणम्॥ शशेरिच्चातः। शिशिरं शीतलम्॥ श्लथेः शिथि च। शिथिरं श्लथम्। लत्वेन शिथिलम्॥ स्थो वुक् ह्रस्वश्च। स्थविरः वृद्धः॥ कौतेर्गुणश्च। कविरः अक्षिण कोणः॥ अशेर्नुच्च। अश्निरः सूर्यः॥ शिङो वुक् ह्रस्वश्च। शिबिरं राजसन्निवेशः॥ सर्तेर्गुणः। सरिरं जलम्। लत्वेन सलिलम्। आदिग्रहणात् च्छिदिरभिदिरादयो भवन्ति॥

॥ ६५२॥ कृशॄशोडीमञ्जिकुटिपटिपूङ्भ्य ईरच्॥ २. ३. ४८॥

एभ्यः ईरच्प्रत्ययो भवति॥ करीरः वृक्षः॥ शरीरं वपुः॥ शोडीरः गर्ववान्॥ मञ्जीरः नूपुरः॥ कोटीरं मुकुटम्। बहुलवचनाद्गुणः॥ पटीरः कार्मुकम्॥ पवीरं बीजावपनम्॥

॥ ६५३॥ वशिघसिकुरिकुलिभ्यः कित्॥ २. ३. ४९॥

वश्यादिभ्यः ईरच्प्रत्ययः किद्भवति। उशीरं वीरणमूलम्॥ क्षीरं दुग्धम्॥ कुरीरं मैथुनम्॥ कुलीरः कर्कटः॥

॥ ६५४॥ डिण्डीरवानीराभीरगभीरगम्भीरकुम्भीरकश्मीरकीरजम्बीरकिम्भीरादयः॥ २. ३. ५०॥

डिण्डीरादयः शब्दा ईरच्प्रत्ययान्ता निपात्यन्ते। डीङो डित्वमभ्यासस्य नुं च। डिण्डीरः फेनः॥ वनेर्वृद्धिश्च। वानीरं वेतसम्॥ आपो भश्च। आभीरः शूद्रजातिः॥ गमेर्भो नुं च। गभीरः अक्षोभ्यः॥ गम्भीरः स एव॥ स्कुमेः सलोपश्च। कुम्भीरः जलचरः॥ कुशेर्मुट् च। कश्मीराः जनपदः॥ कायः कित्। कीरः शुकः॥ जनेर्बुक् च। जम्बीरः वृक्षविशेषः॥ किरः कित् मुक् च। किम्मीरः कर्बुरः। आदिग्रहणात् तूणीरतासीरकरवीरादयो भवन्ति॥

॥ ६५५॥ कृविमदिवासिमसिचतिचङ्क्यकिभ्य उरच्॥ २. ३. ५१॥

एभ्यः उरच्प्रत्ययो भवति । कर्बुरः शबलः ॥ मन्दुरा अश्वशाला वासुरः वायसः ॥ मसुरा वेशली ॥ चतुरः विदग्धः ॥ चङ्कुरः रथः अङ्कुरः प्ररोहः ॥

॥ ६५६ ॥ मुर्मुरमुकुरदर्दुरचिकुरकुक्कुरकुकुर-कुकुन्दुरोन्दुरनूपुरविथुरमद्गुरवागुरादयः ॥ २. ३. ५२ ॥

मुर्मुरादयः शब्दाः उरच्प्रत्ययान्ता निपात्यन्ते । मृङ् उक् मुक् च मुर्मुरः कुकूलम् ॥ मुचेः कः किच्च । मुकुरः आदर्शः मकुलं च ॥ दृङो दुक् च दर्दुरः मण्डूकः ॥ चकेरिच्चोपधायाः । चिकुरः अलकः ॥ कुलेः कुक् च कुक्कुरः श्वा । केचित् कुकुरेति पठन्ति । तत्र किरतेरुत्वं कुक् च गुणाभावश्च कुकुरः यादवः ॥ कौ कुन्देरुत्वातः । कुकुन्दुरौ नितम्बकूपकौ ॥ इन्देरुत्वं उन्दुरः मूषिकः ॥ नुव पुक् दीर्घश्च । नूपुरः तुलाकोटिः ॥ व्यथेः प्रसारणं च । विथुरः राक्षसः ॥ मदिवात्योः गुक् च । मद्गुरः मत्स्यविशेषः वागुरा मृगबन्धनी । आदिग्रहणात् विधुरनिष्ठुरादयो भवन्ति ॥

॥ ६५७ ॥ असेरुरन् ॥ २. ३. ५३ ॥

असेरुरन्प्रत्ययो भवति । असुरः दैत्यः ॥

॥ ६५८ ॥ शावशेराप्तौ ॥ २. ३. ५४ ॥

अश्नोतेः शावुपपदे आप्तौ गम्यमानायां उरन्प्रत्ययो भवति । श्वशुरः जायापत्योः पिता ॥

॥ ६५९ ॥ मसेरूरन् ॥ ३. २. ५५ ॥

मसेरूरन्प्रत्ययो भवति । मसूरः धान्यविशेषः ॥

॥ ६६० ॥ कृञश्चुक् च ॥ ३. २. ५६ ॥

कृञः ऊरन्प्रत्ययः चुक् चागमो भवति । कचूरः पक्षी ॥

॥ ६६१ ॥ खर्जिखडिकुपिवल्लिमयिमण्डिभ्य ऊरः ॥ ३. २. ५७

खर्ज्यादिभ्यः ऊरप्रत्ययो भवति । खर्जूरः वृक्षविशेषः ॥ खडूरः खुरलीस्थानम् ॥ कर्पूरः गन्धद्रव्यम् ॥ वल्लूरः मांसपेशी ॥ मयूरः शिखी ॥ मण्डूरः कल्कविशेषः ॥

॥ ६६२ ॥ तलिमलिशलिभ्यो णित् ॥ २. ३. ५८ ॥

तल्यादिभ्यः ऊरप्रत्ययो णित् भवति । तालूरं जलावर्तः ॥ मालूरः बिल्वः ॥ शालूरः दर्दुरः ।

॥ ६६३ ॥ विडूरसिन्दूरपत्तूरधुस्तूरधुत्तूरादयः ॥ २. ३. ५९ ॥

एते शब्दा ऊरप्रत्ययान्ता निपात्यन्ते । विडूरः पर्वतविशेषः ॥ स्यन्देः संप्रसारणं च । सिन्दूरं लीनपिष्टः ॥ पतेस्तुट् च । पत्तूरं गन्धद्रव्यम् ॥ धुवः स्तुक् तुकौ च । धुस्तूरः उन्मत्तकः ॥ धुत्तूरः स एव । आदिग्रहणात् कस्तूरकरभूरादयो भवन्ति ॥

॥ ६६४ ॥ पतिकठिकुठिकुबिगविगुविदंशिभ्य एरक् ॥ २. ३. ६० ॥

पत्यादिभ्य एरक्प्रत्ययो भवति । पतेरः पक्षी ॥ कठेरः दुःखितः ॥ कुठेरः अञ्जुकः ॥ कुबेरः धनाधिपतिः ॥ गवेरः मेघः ॥ गुवेरः राजा ॥ दशेरः जनपदः ॥

॥ ६६५ ॥ सतेरमूलेरमुदेरादयः ॥ २. ३. ६१ ॥

एते शब्दा एरक्प्रत्ययान्ता निपात्यन्ते । सदेस्त च । सतेरः वायुः ॥ मूलिगुदोर्णुच्च । मूलेरं पण्यम् ॥ मुदेरः मूर्खः । आदिग्रहणात् कवेरनालिकेर-शृङ्गिवेरादयो भवन्ति ॥

॥ ६६६ ॥ कठिचकिभ्यामोरः ॥ २. ३. ६२ ॥

आभ्यामोरप्रत्ययो भवति । कठोरः कठिनः ॥ चकोरः पक्षिविशेषः ॥

॥ ६६७ ॥ कशोरत इच्च ॥ २. ३. ६३ ॥

कशेरोरप्रत्ययः अकारस्य चेकारादेशो भवति । किशोरः बालः ॥

॥ ६६८ ॥ शॄवृकिभ्यः करन् ॥ २. ३. ६४ ॥

एभ्यः करन्प्रत्ययो भवति । शर्करा····[वालुका] ॥....[वर्कर छागशिशुः ॥ केकरः वक्रदृष्टिः ॥

॥ ६६९ ॥ सूपुषिभ्यां कित् ॥ २. ३. ६५ ॥

आभ्यां करन्प्रत्ययः किद्भवति । सूकरः वराहः ॥ पुष्करम् अन्तरिक्षादि ॥

॥ ६७० ॥ अनिकाभ्यां तरच् ॥ २. ३. ६६ ॥

आभ्यां तरच्प्रत्ययो भवति । अन्तरं मध्यम् ॥ कातरः भीरुः ॥

॥ ६७१ ॥ इण्पूभ्यां कित् ॥ २. ३. ६७ ॥

आभ्यां तरच्प्रत्ययः किद्भवति । इतरः निर्दिष्टप्रतियोगी ॥ पूत जलजन्तुः ॥

॥ ६७२ ॥ क्यजिमामघशूभ्यः सरन् ॥ २. ३. ६८ ॥

किप्रभृतिभ्य. सरन्प्रत्ययो भवति । केसरः वकुलः ॥ वेसरः अश्वतरः मासरः आचामः ॥ मत्सरः कोपविशेषः ॥ अक्षरः वर्णविशेषः ॥

॥ ६७३ ॥ वमेश्च ॥ २. ३. ६९ ॥

वसेश्च सरन्प्रत्ययो भवति । वत्सरः हायनः ॥

॥ ६७४ ॥ मपूर्वाच्चित् ॥ २. ३. ७० ॥

सपूर्वाद्वसेः सरन्प्रत्ययश्चिद्भवति । संवत्सरः ॥ परिवत्सरः ॥

॥ ६७५ ॥ इडावत्सरः ॥ २. ३. ७१ ॥

इद्वत्सरः ॥

॥ ६७६ ॥ ऋषितनिकृधूकिभ्यः कित् ॥ २. ३. ७२ ॥

ऋष्यादिभ्यः सरन्प्रत्ययः किद्भवति । ऋक्षरः कण्टकः ॥ तस कौशेयसूत्रम् ॥ कृसरः हविर्विशेषः ॥ धूसरः धान्यविशेषः ॥ किस गन्धद्रव्यम् ॥

॥ ६७७ ॥ कृशॄगॄचतिकडिभ्यः ष्वरच् ॥ २. ३. ७३ ॥

एभ्यः ष्वरच्प्रत्ययो भवति । कर्वरः व्याघ्रः । कर्वरी स्त्री ॥ शर्वरः सायाह्नः । शर्वरी रात्रिः ॥ गर्वरः अहङ्कारः । गर्वरी सन्ध्या ॥ चत्वरं चतुष्पथम् । चत्वरी वेदिः ॥ कड्वरः व्यालाश्वः । कड्वरी दधिविकारः ॥

॥ ६७८ ॥ छित्वरछत्वरधीवरपीवरचीवरगह्वरोपह्वरसंयद्वरनिषद्वरोदुम्बरकूबरतूबरादयः ॥ २. ३. ७४ ।

छित्वरादयः शब्दाः वरच्प्रत्ययान्ता निपात्यन्ते । छिदेस्तः किच्च । छित्वरः धूर्तः ॥ छादेर्णिलुक् तश्च । छत्वरं छदिः ॥ ध्यायो धी च । धीवरः कैवर्तः ॥ प्यायः पी च । पीवरः मांसलः ॥ चिञो दीर्घश्च । चीवरं व्रतिवासः ॥ गुहेरिच्चोपधायाः । गह्वरं गहनम् ॥ उपह्वरः वादिलोपश्च [?] । उपह्वरं समीपः ॥ समि यमो दश्च । संयद्वरः संयमी ॥ नौसदेर्निच्च । निषद्वरं आननम् । निषद्वरी प्रपा ॥ उन्देः किदुमट् च । उदुम्बरः वृक्षविशेषः ॥ कुतुवो दीर्घश्च । कूबरः रथावयवः ॥ तूबरः कन्द्रः श्मश्रुः । आदिग्रहणात् अडम्बराटम्बरसम्बरादयो भवन्ति ॥

॥ ६७९ ॥ कलेरेबरः ॥ २. ३. ७५ ॥

कलेर्धातोरेबरप्रत्ययो भवति । कलेबरं शरीरम् ॥

॥ ६८० ॥ ष्ट्रन् ॥ २. ३. ७६ ॥

सर्वधातुभ्यः ष्ट्रन्प्रत्ययो भवति । छत्रं छत्री वा घर्मवारणम् ॥ पात्रम् अर्जितगुणाधारो ब्राह्मणादिः ॥ स्नात्रं स्नानम् ॥ राजत इति राष्ट्रम् देशः ॥

॥ ६८१ ॥ भ्रस्जिगमिनमिनशिहनिविष्यशां वृद्धिश्च ॥ २. ३. ७७ ॥

एभ्यः ष्ट्रन्प्रत्ययो वृद्धिश्चैषां भवति । भ्राष्ट्रम् अम्बरीषः ॥ गान्त्रं नमनान्तः शिरः ॥ [नान्त्रम् शिरः ॥] नाष्ट्रः यातुधानः रक्षः ॥ [हान्त्रम् रक्षः ॥] वैष्ट्रं विष्णुः ॥ आष्ट्रम् आकाशम् ॥

॥ ६८२ ॥ दिवेर्द्यौ च ॥ २. ३. ७८ ॥

दिवेः ष्ट्रन्प्रत्ययः द्यौ चादेशो भवति । द्यौत्रं त्रिदिवम् ॥

॥ ६८३॥ उषिखनिसूमूभ्यः कित् ॥ २. ३. ७९ ॥

एभ्यः ष्ट्रन्प्रत्ययः किद्भवति । उष्ट्रः करभः ॥ खात्रं ग्रामाधारः [ग्रावाधारमित् ?] सूत्रं तन्तुः ॥ मूत्रं प्रस्रावः ॥

॥ ६८४ ॥ स्त्यायेर्डित् ॥ २. ३. ८० ॥

स्त्यायतेः ष्ट्रन्प्रत्ययो डिद्भवति । स्त्री योषित् ॥

॥ ६८५ ॥ हुयामाश्रुलुपिवसिभसिभ्यस्त्रन् ॥ २. ३. ८१ ॥

हुप्रभृतिभ्यः त्रन्प्रत्ययो भवति । होत्रं होमः ॥ यात्रा प्रस्थानम् मात्रा स्तोकः ॥ श्रोत्रं श्रवणम् ॥ लोप्त्रम् अपहृतद्रव्यम् ॥ वस्त्रं वासः भस्त्रा चर्ममयावपनम् ॥

॥ ६८६ ॥ गमेरा च ॥ २. ३. ८२ ॥

गमेस्त्रन्प्रत्ययः आकारश्चान्तादेशो भवति । गात्रं शरीरम् ॥

॥ ६८७ ॥ अमिचिमिदिशंसिभ्यः कित् ॥ २. ३. ८३ ॥

अमादिभ्यः त्रन्प्रत्ययः किद्भवति । अन्त्रं पुरीतत् ॥ चित्रम् आश्चर्यम् मित्रं सुहृत् । अमित्रः शत्रुः ॥ शस्त्रं स्तोत्रम् ॥

॥ ६८८ ॥ पूङो ह्रस्वश्च ॥ २. ३. ८४ ॥

पूङस्त्रनप्रत्ययो ह्रस्वश्च भवति । पुनातीति पुत्रः सूनुः । [यत्] पुन्ना नरकात् त्रायत इति व्युत्पत्तिः तत् संज्ञाशब्दानामनेकधा व्याख्यानं लक्षयति

॥ ६८९ ॥ गुवृवीपचिवचियमिमनितनिसदिक्षदिक्षिभ्यो नित् ॥ २. ३. ८५ ॥

गुप्रभृतिभ्यः त्रन्प्रत्ययो निद्भवति । गोत्रम् अन्ववायः ॥ वरत्रं चर्म वेत्रं वीरुद्विशेषः ॥ पक्त्रम् अग्निः ॥ वक्त्रम् आस्यम् ॥ यन्त्रम् अर टयादिः ॥ मन्त्रः इषेत्वादिः ॥ तन्त्रं प्रसारितास्तन्तवः ॥ सत्रं सद्म ॥ क्ष जातिः ॥ क्षेत्रं भूतादि ॥

॥ ६९० ॥ अमियजिवधिपतिकलिनक्षिभ्योऽत्रन् ॥ २. ३. ८६ ॥

एभ्योऽत्रन्प्रत्ययो भवति। अमत्रं भाजनम् ॥ यजत्रं यजनम् ॥ वधत्रम् आयुधम् ॥ पतत्रं पक्षः ॥ कलत्रं दाराः ॥ नक्षत्रं तारा ॥

॥ ६९१ ॥ वृञश्चित् ॥ २. ३. ८७ ॥

वृञोऽत्रन्प्रत्ययो भवति चिच्च। वरत्रा रज्जुः ॥

॥ ६९२ ॥ अशिवहिकटिभ्य इत्रः ॥ २. ३. ८८ ॥

अश्यादिभ्य इत्रप्रत्ययो भवति। अशित्रं अन्ना····वनम् [अन्नपानम्] ॥ वहित्रं वाहनम् ॥ कटित्रं लेख्यचर्म ॥

॥ ६९३ ॥ त्रादिभ्य उत्रः ॥ २. ३. ८९ ॥

त्रादिभ्य उत्रप्रत्ययो भवति। तरुत्रं प्लवः ॥ करुत्रम् अभिप्रेतम् ॥

॥ ६९४ ॥ स्याशक्यमिभ्यो लः ॥ २. ३. ९० ॥

स्यादिभ्यो लप्रत्ययो भवति। स्यालः पत्नीभ्राता ॥ शक्लः मनोज्ञ-दर्शनम् ॥ अम्लः रसः ॥

॥ ६९५ ॥ शीङः क्लन् ॥ २. ३. ९१ ॥

शीङः क्लन्प्रत्ययो भवति। शीलं स्वभावः ॥

॥ ६९६ ॥ भिल्लाच्छभल्लसौविदल्लादयः ॥ २. ३. ९२ ॥

भिल्लादयः शब्दाः क्लन्प्रत्ययान्ता निपात्यन्ते। भिलेश्चिच्च। भिल्लः अन्त्यजातिः ॥ अच्छे भलेश्च। अच्छभल्लः ऋक्षः ॥ सुञि विदेरिल्क् सौ च सुञः। सौविदल्लः कञ्चुकी ॥

॥ ६९७ ॥ मङ्गिमृदिमण्डिकुण्डिकन्दिभ्योऽलच् ॥ २. ३. ९३ ॥

मङ्ग्यादिभ्योऽलच्प्रत्ययो भवति। मङ्गलं भद्रम् ॥ मर्दलः मुरजः ॥ मण्डलं देशः ॥ कुण्डलं कर्णाभरणम् ॥ कन्दलं प्ररोहः ॥

॥ ६९८ ॥ लङ्गेर्दीर्घश्च ॥ २. ३. ९४ ॥

लङ्गेरलच्प्रत्ययो दीर्घश्च भवति । लाङ्गलम् ॥

॥ ६९९ ॥ ऋजनोर्गुक् च ॥ २. ३. ९५ ॥

आभ्यामलच्प्रत्ययो गुक् चागमो भवति ॥ अर्गला परिखा ॥ जङ्गलं निर्जलो देशः ॥

॥ ७०० ॥ कुकमियमिशमिशकिशबितृपिकुविशलिकलिपलिभ्यो ऽलक् ॥ २. ३. ९६ ॥

कुप्रभृतिभ्योऽलक्प्रत्ययो भवति । कुवली क्षुद्रबदरी ॥ कमलं पद्मम् ॥ यमलं युगलम् ॥ शमलम् शकृत् ॥ शकलं खण्डः ॥ शबलः कल्माषः ॥ तृपला लता ॥ कुवलः प्रवालः ॥ शलल्म् शलल्यङ्गरुहम् । कललं गर्भप्रथमावस्था ॥ पललं भृष्टतिलासतीचूर्णम् ॥

॥ ७०१ ॥ वृषिपटिदेविकेविवपिचपिभ्यश्चित् ॥ २. ३. ९७ ।

वृष्यादिभ्योऽलक्प्रत्ययश्चिद्भवति । वृषलः शूद्रः ॥ पटलं छदिः देवलः ऋषिः ॥ केवलम् एकम् ॥ उपलः पाषाणः ॥ चपलः अस्थिरः ॥

॥ ७०२ ॥ कुगुध्वञ्चिचञ्चिवहिदिहितृसृकुसिभ्यो लः ॥ २. ३. ९८ ॥

कुप्रभृतिभ्यो लप्रत्ययश्चिद्भवति ॥ कवलः ग्रासः ॥ गवलः महिषः धवलः श्वेतः ॥ अञ्चलं वस्त्रान्तः ॥ चञ्चलः अस्थिरः ॥ वहलः घनः देहली द्वाराधः पट्टः ॥ तरलः अधीरः ॥ सरलः अकुटिलः ॥ कोसलः जनपदः ॥

॥ ७०३ ॥ मुरलोरलमुसलकुशलकोमलकोहलविरलकेरल-कुन्तलकपिञ्जलकज्जलेज्जलच्छगलभगलाहलकहलकाहलनाहल-नलयुगलपिप्पलादयः ॥ २. ३. ९९ ॥

मुरलादयः शब्दाः अलप्रत्ययान्ता निपात्यन्ते । मु····र्मोर्वलो किच्च । मुरलाः जनपदः ॥ उरलः उत्कटः ॥ मुसेः किच्च । मुसल

प्रहरणम् ॥ कुशेः किच्च । कुशलः दक्षः ॥ कमेरत उच्च । कोमलम् अजठरम् ॥ कुहेर्णिच्च। कोहलः भरतसूनुः ॥ वीरेर्हूस्वश्च । विरलः असंहतः ॥ किरः केर च । केरलाः जनपदः ॥ कनेरत उत् तुक् च । कुन्तलाः जनपदः ॥ कंपेरिञ्जः नलोपश्च । कपिञ्जलः गौरतित्तिरिः ॥ कषीषोर्ज्जश्च । कज्जलं मषिः ॥ इज्जलः वृक्षविशेषः ॥ छामेर्गुर्हूस्वश्च । छगलः छागः ॥ भगलः मुनिः ॥ आङि हलौ णिच्च । आहलं विषाणम् ॥ कणेर्हो वृद्धिश्च । काहलः वाद्यविशेषः ॥ काहलः तुमुलः ॥ नहेर्वृद्धिश्च । नाहलः म्लेच्छः ॥ अनेर्निच्च । अनलः अग्निः ॥ युजेर्गश्च । युगलं युग्मम् ॥ पिवः पुः पश्च । पिप्पलः अश्वत्थः । आदिग्रहणात् मुद्गलपुद्गलादयो भवन्ति ॥

## ॥ ७०४ ॥ ऋकृमृवृचषिभ्य आलच् ॥ २. ३. १०० ॥

ऋप्रभृतिभ्यः आलच्प्रत्ययो भवति । अरालं वक्रम् ॥ करालम् उच्चम् ॥ मरालः हंसः ॥ वरालः वदान्यः ॥ चषालः यूपकटकः ॥

## ॥ ७०५ ॥ तमिविडिमृणिकुणिकुलिपलिपञ्चिवीङ्भ्यः कालन् ॥ २. ३. १०१ ॥

तम्यादिभ्यः कालन्प्रत्ययो भवति । तमालः वृक्षविशेषः ॥ विडालः मार्जारः ॥ मृणालं बिसम् ॥ कुणालं वीरुद्विशेषः ॥ कुलालः कुम्भकारः ॥ पलालः अणुव्रीह्यादि ॥ पञ्चालाः जनपदः ॥ वियालः चारः ॥

## ॥ ७०६ ॥ कम्पेः नलोपश्च ॥ २. ३. १०२ ॥

कम्पेः कालन्प्रत्ययो नलोपश्च भवति । कपालं घटाद्यवयवः ॥

## ॥ ७०७ ॥ भञ्जेर्गश्च ॥ २. ३. १०३ ॥

भञ्जेः कालन्प्रत्ययो गश्चान्तादेशो भवति । भगालं घटकर्पटम् ॥

## ॥ ७०८ ॥ सर्तेर्गुक् च ॥ २. ३. १०४ ॥

सर्तेः कालन्प्रत्ययः गुक् चागमो भवति । सृगालः गोमायुः ॥

॥ ७०९ ॥ स्थालचात्वालकीलालकङ्कालहिन्तालवेताल-
जम्बालादयः ॥ २. ३. १०५ ॥

स्थालादयः शब्दाः कालन्प्रत्ययान्ता निपात्यन्ते । स्थश्चिश्च । स्थालं भाजनम् ॥ चतेर्वुक् वृद्धिश्च । चात्वालः यज्ञगर्तः ॥ कल ईत्वातः कीलालं रक्तम् ॥ कचेर्नु कश्च । कङ्कालं कलेवरम् ॥ हिंसोस्त च हिन्तालः वृक्षविशेषः ॥ वियस्तुक् गुणश्च । वेतालः रजनिचरविशेषः । जम्बे लुक् च । जम्बालः कर्दमः । आदिग्रहणात् चक्रवालकरवालालवालादयं भवन्ति ॥

॥ ७१० ॥ पतिचण्डिभ्यामालञ् ॥ २. ३. १०६ ॥

आभ्यामालञ्प्रत्ययो भवति । पातालं रसातलम् ॥ चण्डाल जनङ्गमः ॥

॥ ७११ ॥ कुटिमहिमिथ्यनिभ्यः किलच् ॥ २. ३. १०७ ॥

एभ्यः किलच्प्रत्ययो भवति । कुटिलं वक्रम् ॥ महिला स्त्री मिथिला नगरी ॥ अनिलः वायुः ॥

॥ ७१२ ॥ भडिलभण्डिलशण्डिलस्थण्डिलकोकिल-
कपिलविचकिलादयः ॥ २. ३. १०८ ॥

भडिलादयः शब्दाः किलच्प्रत्ययान्ता निपात्यन्ते । भण्डेर्नलोपश्च भडिलः ऋषिः ॥ भण्डिलः ऋषिः ॥ शमेर्डक् च । शण्डिलः ऋषिः ॥ स्थले नुं च । स्थण्डिलं व्रतिशयनवेदिका ॥ कुकोर्गुणश्च । कोकिलः परभृतः ॥ कं पश्च । कपिलः मुनिः ॥ विचेरकट् च । विचकिलः मल्लिकाविशेषः आदिग्रहणात् चण्डिलगोभिलनिकुम्भिलादयो भवन्ति ॥

॥ ७१३ ॥ हृषिवृतिचटितण्डिशकिशङ्क्युत्कण्ठिभ्य
उलच् ॥ २. ३. १०९ ॥

एभ्यः उलच्प्रत्ययो भवति । हर्षुलः हर्षवान् ॥ वर्तुलं वृत्तम् ॥ चटुल

चञ्चलः ॥ तण्डुलः निष्कषो व्रीह्यादिः ॥ शकुलः मत्स्यः ॥ शकुला क्रीडनशङ्कुः ॥ उत्कण्ठुलः उत्कण्ठावान् ॥

॥ ७१४ ॥ निचुलवञ्जुलवकुलतुमुलपृथुलस्थूलविसंस्थुलादयः ॥ २. ३. ११० ॥

निचुलादयः शब्दाः उलच्प्रत्ययान्ता निपात्यन्ते । निजेश्चः किच्च । निचुलः वञ्जुलः ॥ वजेर्नुं च । वञ्जुलः निचुलः ॥ वचेः क च । वकुलः केसरः ॥ तमेरुच्चातः । तुमुलः भयानकः ॥ प्रथेः प्रसारणं च । पृथुलः विस्तीर्णः ॥ स्थः किच्च । स्थूलः पटकुटीविशेषः । वौ ससेस्थुट् च । विसंस्थुलः व्यग्रः । आदिग्रहणात् लगुलवल्गुलादयो भवन्ति ॥

॥ ७१५ ॥ पिञ्ज ऊलच् ॥ २. ३. १११ ॥

पिञ्ज ऊलच्प्रत्ययो भवति । पिञ्जूलः हस्तिबन्धनपाशः ॥

॥ ७१६ ॥ कुसूलकुकूलदुकूलताम्बूलबल्लूललाङ्गूलशार्दूलादयः ॥ २. ३. ११२ ॥

कुसूलादयः शब्दाः ऊलच्प्रत्ययान्ता निपात्यन्ते । कसेरत उच्च । कुसूलं कोष्ठम् ॥ कुदुवोः कुट् किच्च । कुकूलः करीषोऽग्निः ॥ दुकूलं क्षौमं वासः ॥ तमेर्बुक् दीर्घश्च । ताम्बूलम् पूगपर्णचूर्णसंयोगः ॥ बन्धेः लुं बश्च [?] । बल्लूलः वृक्षविशेषः ॥ लङ्गेर्दीर्घश्च । लाङ्गूलं वालधिः ॥ शृणातेर्दुक् वृद्धिश्च । शार्दूलः व्याघ्रः । आदिग्रहणात् मार्कूलवञ्जूलकण्डूलादयो भवन्ति ॥

॥ ७१७ ॥ महेलच् ॥ २. ३. ११३ ॥

महेरेलच्प्रत्ययो भवति । महेला स्त्री ॥

॥ ७१८ ॥ कटिपटिभ्यामोलः ॥ २. ३. ११४ ॥

आभ्यामोलप्रत्ययो भवति । कटोलः ओषधिः ॥ पटोला ओषधिः ॥

॥ ७१९ ॥ कपोलकल्लोलकक्कोलमक्कोलादयः ॥ २. ३. ११५ ॥

कपोलादयः शब्दा ओलच्प्रत्ययान्ता निपात्यन्ते । कंपेर्नलोपश्च ।

कपोलः वदनैकदेशः ॥ कलेश्च । कल्लोलः ऊर्मिः ॥ कचिमचोः कश्च कक्कोलः लताविशेषः ॥ मक्कोलः सुधाविशेषः । आदिग्रहणात् गण्डोलाद भवन्ति ॥

॥ ७२० ॥ वलेः कलच् ॥ २. ३. ११६ ॥

वलेः कलच्प्रत्ययो भवति । वल्कलम् तरुत्वक् ॥

॥ ७२१ ॥ मिञः खलञ्चैच्च ॥ २. ३. ११७ ॥

मिञः खलच्प्रत्ययः चकारात् कलच्च । एकारश्चान्तादेशो भवति मेखला गिरिनितम्बः ॥ मेकलः नर्मदाप्रभवोऽद्रिः ॥

॥ ७२२ ॥ श्रो नुं ह्रस्वश्च ॥ २. ३. ११८ ॥

शृणोतेः खलच्प्रत्ययो नुं ह्रस्वश्च भवति । शृङ्खला लोहरज्जुः ॥

॥ ७२३ ॥ शमिकमिभ्यां बलच् ॥ २. ३. ११९ ॥

आभ्यां बलच्प्रत्ययो भवति । शम्बलम् पाथेयम् ॥ कम्बल प्रावारः ॥

॥ ७२४ ॥ डुकुटिकशिशालिभ्यः क्मलच् ॥ २. ३. १२० ।

एभ्यः क्मलच्प्रत्ययो भवति । डुमलम् जलम् ॥ कुट्मलम् मुकुलम् कश्मलम् मलिनम् ॥ शाल्मलः वृक्षविशेषः ॥

॥ ७२५ ॥ वतेः सलक् ॥ २. ३. १२१ ॥

वतेः सलक्प्रत्ययो भवति । वत्सलः गोमान् ॥

॥ ७२६ ॥ शीङो वलञ्वलनौ ॥ २. ३. १२२ ॥

शीङो वलञ्वलनौ प्रत्ययौ भवतः । शैवालं अवका ॥ शैवलं तदेव ॥

॥ ७२७ ॥ तुल्वलेल्वलपल्वलादयः ॥ २. ३. १२३ ॥

तुल्वलादयः शब्दाः वलञ्प्रत्ययान्ता निपात्यन्ते । तुलीलिपलीनां

णिलुक् च । तुल्वलः ऋषिः ॥ इल्वलः असुरः । इल्वलाः तिस्रः मृगशिरस्ताराः ॥ पल्वलम् जलाशयः । आदिग्रहणात् शाद्वलादयो भवन्ति ॥

॥ ७२८ ॥ शृसृहृसिभ्यो वः ॥ २. ३. १२४ ॥

एभ्यो वप्रत्ययो भवति । शर्वः शिवः ॥ सर्वः स एव । ह्रस्वः लघु ॥

॥ ७२९ ॥ उर्देर्धश्च ॥ २. ३. १२५ ॥

" उर्द् माने " इत्यस्माद्धातोः वप्रत्ययो धकारश्चान्तादेशो भवति । ऊर्ध्वा ऊर्ध्ववर्ष्म ॥

॥ ७३० ॥ गन्धेररक् च ॥ २. ३. १२६ ॥

गन्धेर्वप्रत्ययोऽरक् चागमो भवति । गन्धर्वः देवविशेषः ॥

॥ ७३१ ॥ इण्शीङ्स्याशालापदिभ्यो नित् ॥ २. ३. १२७ ॥

एभ्यो वप्रत्ययो निद्भवति । एवः केवलः ॥ शेवः सुखकृत् ॥ श्यावः कपिशः ॥ शावः अर्भकः ॥ लावः पक्षी ॥ पद्वः वायुः ॥

॥ ७३२ ॥ इष्वनिघृष्वरिष्वलिष्वादयः ॥ २. ३. १२८ ॥

इष्वादयः शब्दाः वप्रत्ययान्ता निपात्यन्ते । इषिघृषिऋषीणां किच्च । इष्वः आचार्यः ॥ निघृष्वः निकषः ॥ रिष्वः हिंस्रः ॥ लषेरिच्चोपधायाः । लिष्वः लम्पटः । आदिग्रहणात् वृष्वादयो भवन्ति ॥

॥ ७३३ ॥ अशूस्रुप्रुषिलटिखटिकणिविलिनलिशालिखलिभ्यः कन् ॥ २. ३. १२९ ॥

अशूप्रभृतिभ्यः कन्प्रत्ययो भवति । अश्वः तुरगः ॥ स्रुवः हवनभाण्डम् ॥ प्रुष्वः निवृत्तिः ॥ लट्वा क्षुद्रकटका ॥ खट्वा शय्या ॥ कण्वः मुनिः ॥ विल्वः मालूरः ॥ नल्वः भूमानविशेषः ॥ शल्वाः क्षत्रियाः ॥ खल्वः दृतिः । खल्वम् निम्नम् ॥

॥ ७३४ ॥ शीङापो ह्रस्वश्च ॥ २. ३. १३० ॥

आभ्यां कन्प्रत्ययो ह्रस्वश्च भवति । शिवः शंभुः । शिवा हरीतकी अप्वा देवयूथम् ॥

॥ ७३५ ॥ यसेर्ह च ॥ २. ३. १३१ ॥

यसेः कन्प्रत्ययः हश्चान्तादेशो भवति । यह्वा बुद्धिः ॥

॥ ७३६ ॥ लिहेर्जिह च ॥ २. ३. १३२ ॥

लिहेः कन्प्रत्ययो जिह चादेशो भवति । जिह्वा रसना ॥

॥ ७३७ ॥ न भुवो डित् ॥ २. ३. १३३ ॥

भवतेर्नञ्युपपदे कन्प्रत्ययो भवति । अभ्वम् अद्भुतम् ॥

॥ ७३८ ॥ कुपिकितिपणिपेलृपल्लिवल्लिमालि-
भ्योऽवक् ॥ २. ३. १३४ ॥

एभ्योऽवक्प्रत्ययो भवति । कुपवः मानम् ॥ कितवः धूर्तः ॥ पणव वाद्यम् ॥ पेलवः कोमलः ॥ पल्लवः किसलयम् ॥ वल्लवः गोपः ॥ मालव जनपदः ॥

॥ ७३९ ॥ कैरवभैरवकैरण्डवादीनवादयः ॥ २. ३. १३५ ॥

एते शब्दाः अवक्प्रत्ययान्ता निपात्यन्ते । कृभृञोः कैभरौ च । कैर कुमुदम् ॥ भैरवः भर्गः ॥ कृञोऽण्डक् वृद्धिश्च । कारण्डवः जलपक्षी आङि दीङो नुट् च । अदीनवः दोषः । आदिग्रहणात् कोद्रवकोटवबटवाद भवन्ति ॥

॥ ७४० ॥ शृणोतेरावः ॥ २. ३. १३६ ॥

शृणोतेरावप्रत्ययो भवति । शरावः वर्धमानकः ।

॥ ७४१ ॥ प्रथेः षिवन् पृथ च ॥ २. ३. १३७ ॥

प्रथेः षिवन्प्रत्ययःपृथ चादेशो भवति । पृथिवी भूः ॥

॥ ७४२ ॥ अमेरीवः ॥ २. ३. १३८ ॥

अमेरीवप्रत्ययो भवति । अमीवा ऋमुक्षाः ॥

॥ ७४३ ॥ ग्रसेर्डित् ॥ २. ३. १३९ ॥

ग्रसेरीवप्रत्ययो डित् भवति । ग्रीवा कन्धरा ॥

॥ ७४४ ॥ कुदापाभ्यः शः ॥ २. ३. १४० ॥

एभ्यः शप्रत्ययो भवति । कोशः सारः ॥ दाशः कैवर्तः ॥ पाशः बन्धनम् ॥

॥ ७४५ ॥ वृभृवम्यमिकुभ्यः शक् ॥ २. ३. १४१ ॥

वृप्रभृतिभ्यः शक्प्रत्ययो भवति । वृशम् शृङ्गिबेरम् ॥ भृशम् अत्यर्थम् ॥ वंशः वेणुः ॥ अंशः भागः ॥ कुशः दर्भः ॥

॥ ७४६ ॥ कलेरशच् ॥ २. ३. १४२ ॥

कलेरशच्प्रत्ययो भवति । कलशः कुम्भः ॥

॥ ७४७ ॥ इणस्तुट् च ॥ २. ३. १४३ ॥

इणोऽशच्प्रत्ययः तुट् चागमो भवति । एतशः अश्वः ॥

॥ ७४८ ॥ पलेराशच् ॥ २. ३. १४४ ॥

पलेराशच्प्रत्ययो भवति । पलाशः ब्राह्मवृक्षः ॥

॥ ७४९ ॥ कनेरी चातः ॥ २. ३. १४५ ॥

कनेराशच्प्रत्ययः । अकारस्य ईकारादेशो भवति । कीनाशः यमः ॥

॥ ७५० ॥ कणिकुलिवलिबलिभ्यः किशच् ॥ २. ३. १४६ ॥

कण्यादिभ्यः किशच्प्रत्ययो भवति । कणिशं सस्यमञ्जरी ॥ कुलिशं वज्रम् ॥ वलिशं यत्तस्थित्वा मृगा व्यापाद्यन्ते ॥ बलिशं मत्स्यग्रहणम् ॥

॥ ७५१ ॥ तिनिशेतिशबालिशादयः ॥ २. ३. १४७ ॥

तिनिशादयः शब्दाः किशच्प्रत्ययान्ता निपात्यन्ते। तनोतेरित्वातः। तिनिशः वृक्षः॥ इतिशः मुनिः॥ बलेर्वृद्धिश्च। बालिशः मूर्खः॥

॥ ७५२ ॥ अर्तेः पिशन् ॥ २. ३. १४८ ॥

अर्तेः पिशन्प्रत्ययो भवति। अर्पिशम् अग्रमांसः॥

॥ ७५३ ॥ अङ्किमस्जिभ्यामुशच् ॥ २. ३. १४९ ॥

आभ्यामुशच्प्रत्ययो भवति। अङ्कुशः सृणिः॥ मग्गुशः नकुलः।

॥ ७५४ ॥ युमाभ्यां षः ॥ २. ३. १५० ॥

आभ्यां षप्रत्ययो भवति। योषा स्त्री॥ माषः धान्यविशेषः॥

॥ ७५५ ॥ स्नुमूभ्यां कित् ॥ २. ३. १५१ ॥

आभ्यां षप्रत्ययः किद्भवति। स्नुषा पुत्रवधूः॥ मूष हेमावपनादिः॥

॥ ७५६ ॥ कलेर्मषक् ॥ २. ३. १५२ ॥

कलेर्मषक्प्रत्ययो भवति। कल्मषम् पापम्॥

॥ ७५७ ॥ कुलेश्च माषक् ॥ २. ३. १५३ ॥

कुलेश्च माषक्प्रत्ययो भवति। कल्माषः वर्णः॥ कुल्माषः अर्धस्विन्नमाषादिः॥

॥ ७५८ ॥ जलेराषः ॥ २. ३. १५४ ॥

जलेराषप्रत्ययो भवति। जलाषं जलम्॥

॥ ७५९ ॥ अविमह्योष्टिषच् ॥ २. ३. १५५ ॥

आभ्यां टिषच्प्रत्ययो भवति। अविषः समुद्रः। अविषी गङ्गा महिषः सैरिभः। महिषी राजपत्नी॥

॥ ७६० ॥ रुहेर्वृद्धिश्च ॥ २. ३. १५६ ॥

रुहेष्टिषच्प्रत्ययो वृद्धिश्च भवति। रौहिषः तृणजातिः। रौहिषी दूर्वा

॥ ७६१ ॥ तवेर्णिद्वा ॥ २. ३. १५७ ॥

तवेष्टिषच्प्रत्ययो णिद्वा भवति । तविषं जलम् ॥ ताविषं तदेव ॥

॥ ७६२ ॥ नञि व्यथेः ॥ २. ३. १५८ ॥

व्यथेर्नञ्युपपदे टिषच्प्रत्ययो भवति । अव्यथिषः सूर्यः । अव्यथिषी पृथिवी ॥

॥ ७६३ ॥ कलेर्वुगिच्चोपधायाः ॥ २. ३. १५९ ॥

कलेष्टिषच्प्रत्ययो वुगागमः उपधायाश्चेकारादेशो भवति । किल्बिषं पापम् ॥

॥ ७६४ ॥ कॄतॄभ्यामीषन् ॥ २. ३. १६० ॥

आभ्यामीषन्प्रत्ययो भवति । करीषं शुष्कगोमयरजः ॥ तरीषं प्लवः ॥

॥ ७६५ ॥ ऋजिशॄपॄभ्यः कित् ॥ २. ३. १६१ ॥

ऋज्यादिभ्यः ईषन्प्रत्ययः किद्भवति । ऋजीषः अवस्करः ॥ शिरीषः वृक्षः ॥ पुरीषं शकृत् ॥

॥ ७६६ ॥ उषेर्नक् लोपश्च ॥ २. ३. १६२ ॥

उषेरीषन्प्रत्ययः नक् लोपश्चागमो भवति । उष्णीषम् मुकुटम् ॥

॥ ७६७ ॥ अमेर्वरट् च ॥ २. ३. १६३ ॥

अमेरीषन्प्रत्ययो वरट् चागमो भवति । अम्बरीषं भ्राष्ट्रम् ॥

॥ ७६८ ॥ ऋपॄकॢपिहपिनहिकलिभ्य उषन् ॥ २. ३. १६४ ॥

एभ्य उषन्प्रत्ययो भवति । अरुषं व्रणः ॥ परुषः कलुषः ॥ कल्पुषः क्रियानुगुणः ॥ हपुषा ओषधिः ॥ नहुषः राजा ॥ कलुषः अस्वच्छः ॥

॥ ७६९ ॥ पुरः किच्च ॥ २. ३. १६५ ॥

पिपर्तेरुषन्प्रत्ययः किद्भवति । पुरुषः ॥

॥ ७७० ॥ जॄपॄकॄमञ्जिपीयिहन्यङ्गिगण्डिभ्य ऊषन् ॥ २. ३. १६६ ॥

जॄप्रभृतिभ्यः ऊषन्प्रत्ययो भवति । जरूषः आदित्यः ॥ परू वृक्षविशेषः ॥ करूषः काष्ठम् ॥ मञ्जूषा कोष्ठकम् ॥ पीयूषम् अमृतम् हनूषः राक्षसः ॥ अङ्गूषः बाणः ॥ गण्डूषः द्रवकवलम् ॥

॥ ७७१ ॥ यूषशूषार्कलूषकारूषकोरदूषाटरूष-शैलूषादयः ॥ २. ३. १६७ ॥

यूषादयः शब्दाः ऊषन्प्रत्ययान्ता निपात्यन्ते । युशुवोर्ङिच्च । यू पेयविशेषः॥ शूषः पलम् ॥ अर्के लुट् च । अर्कलूषः ऋषिः ॥ कृञो वृद्धिश्च कारूषाः जनपदः ॥ कुरेरदुट् च । कोरदूषः कोद्रवः ॥ आटेररट् च आटरूषः पाशः ॥ शलेरैत्वातः । शैलूषः नटः । आदिग्रहणात् ऊषप्रत्यय भ्यूषादयो भवन्ति ॥

॥ ७७२ ॥ कश्यशिपचिमुचियजिहनिकमिवदि-वामान्माभ्यः सः ॥ २. ३. १६८ ॥

कश्यादिभ्यः सप्रत्ययो भवति । कक्षः गहनम् ॥ अक्षः विभीतकादिः पक्षः अर्धमासः ॥ मोक्षः अपवर्गः ॥ यक्षः गुह्यकः ॥ हंसः मरालः ॥ कं हिरण्यम् ॥ वत्सः तर्णकः ॥ वासा आटरूषकः ॥ मांसं पिशितम् ॥ मा चैत्रादिः ॥

॥ ७७३ ॥ प्लुषेरच्चोपधायाः ॥ २. ३. १६९ ॥

प्लुषेः सप्रत्ययः उपधायाश्चाकारान्तादेशो भवति । प्लक्षः वृ विशेषः ॥

॥ ७७४ ॥ ऋचिरिषिकृतिवृश्चिशॄगृधिभ्यः कित् ॥ २. ३. १७० ॥

ऋच्यादिभ्यः सप्रत्ययः किद्भवति । ऋक्षं नक्षत्रम् ॥ कपिरकादित्वा-ल्लत्वेन लिक्षा ॥ कुत्सः मुनिः ॥ वृक्षः पादपः ॥ शीर्षं शिरः ॥ गृत्सः गृध्नुः ॥

॥ ७७५ ॥ अमेर्नित् ॥ २. ३. १७१ ॥

अमेर्धातोः सप्रत्ययो निद्भवति । अंसः बाहुमूर्धा ॥

॥ ७७६ ॥ उन्देर्नलोपश्च ॥ २. ३. १७२ ॥

"उन्दी क्लेदने" इत्यस्माद्धातोः नित्, नकारलोपश्चास्य भवति । उत्सः जलम् ॥

॥ ७७७ ॥ पन्यल्यवरन्धिरभिचमिचटयतितमियुभ्योऽसच्

॥ २. ३. १७३ ॥

पन्यादिभ्योऽसच्प्रत्ययो भवति । पनसः वृक्षविशेषः ॥ अलसः अनुद्यमः ॥ अवसं पाथेयम् ॥ रन्धसः अन्धजातिः ॥ रभसः उद्धर्षः ॥ चमसः सोमपात्रम् ॥ चटसः चर्मपुटम् ॥ अतसी धान्यविशेषः ॥ तमसा नाम नदी ॥ यवसः अश्वादिघासः ॥

॥ ७७८ ॥ वेतसतामरससारसादयः ॥ २. ३. १७४ ॥

वेतसादयोऽसच्प्रत्ययान्ता निपात्यन्ते । वियस्तुट् च । वेतसः वानीरः ॥ तमेः वृद्धिश्च । तामरसं प द्म॥ सर्तेर्णिच्च । सारसः पक्षिविशेषः ॥ आदिग्रहणात् उरसपुल्कसादयो भवन्ति ॥

॥ ७७९ ॥ पीङो नसक् ॥ २. ३. १७५ ॥

पीङो नसक्प्रत्ययो भवति । पीनसः श्लेष्मव्याधिः ॥

॥ ७८० ॥ कृपियुवलिभ्य आसः ॥ २. ३. १७६ ॥

कृपादिभ्यः आसप्रत्ययो भवति । कर्पासः पित्तप्रकृतिः ॥ यवासः दुरालभा ॥ वलासः श्लेष्म ॥

॥ ७८१ ॥ किलेः कित् ॥ २. ३. १७७ ॥

किलेरासप्रत्ययः किद्भवति। किलासं सिध्मम्। किलासी पा खर्परः॥

॥ ७८२ ॥ कुरः पासः ॥ २. ३. १७८ ॥

"कुर शब्दे" इत्यस्मात् पासः प्रत्ययो भवति। कूर्पा कन्चुकम्॥

॥ ७८३ ॥ पटिवीभ्यां टिसडिसचौ ॥ २. ३. १७९ ॥

आभ्यां टिसडिसचौ प्रत्ययौ भवतः। पटिसम् आयुधविशेषः॥ बि मृणालम्॥

॥ ७८४ ॥ तालेरीसच् ॥ २. ३. १८० ॥

तालेरीसच्प्रत्ययो भवति। तालीसं गन्धद्रव्यम्॥

॥ ७८५ ॥ त्रपेरुसच् ॥ २. ३. १८१ ॥

त्रपेरुसच्प्रत्ययो भवति। त्रपुसी। विधानसामर्थ्यात् षत्वं भवति॥

॥ ७८६ ॥ अलेरम्बुसः ॥ २. ३. १८२ ॥

अलेरम्बुसप्रत्ययो भवति। अलम्बुसः यातुधानः। अलम्बुस नामौषधिः॥

॥ ७८७ ॥ लूञो हः ॥ २. ३. १८३ ॥

लूञो हः प्रत्ययो भवति। लोहः सुवर्णादि॥

॥ ७८८ ॥ हिंसेः कित् सिं च ॥ २. ३. १८४ ॥

हिंसेः हः प्रत्ययः कित् सिं चास्यादेशो भवति। सिंहः मृगराजः॥

॥ ७८९ ॥ कलेरहः ॥ २. ३. १८५ ॥

कलेरहः प्रत्ययो भवति। कलहः युद्धम्॥

॥ ७९० ॥ अनेरोकहः ॥ २. ३. १८६ ॥

अनेरोकहः प्रत्ययो भवति । अनोकहः वृक्षः ॥

॥ ७९१ ॥ कटेराहः ॥ २. ३. १८७ ॥

कटेराहः प्रत्ययो भवति । कटाहः लोहादिपात्रम् ॥

॥ ७९२ ॥ निरिण उहक् ॥ २. ३. १८८ ॥

इणो निर्युपपदे अहक्प्रत्ययो भवति । निर्यूहः सौधादिकाष्ठनिर्गमः ॥

॥ ७९३ ॥ दस्त्यूहः ॥ २. ३. १८९ ॥

दस्त्यूहः प्रत्ययो भवति । दस्त्यूहः पक्षिविशेषः ॥

॥ ७९४ ॥ वलेरक्षन् ॥ २. ३. १९० ॥

वलेरक्षन्प्रत्ययो भवति । वलक्षः शुक्लः ॥

॥ ७९५ ॥ लाक्षाद्राक्षामिक्षादयः ॥ २. ३. १९१ ॥

लाक्षादयः शब्दाः अक्षन्प्रत्ययान्ता निपात्यन्ते । लसेरा च । लाक्षा जतु ॥ रसेर्दट् च । द्राक्षा मृद्वीका ॥ आङि मृजेष्टिलोपः प्रत्ययादेरिच । आमिक्षा हविर्विशेषः । आदिग्रहणात् चोक्षपीयूक्षादयः ॥

इति श्रीदण्डनाथनारायणभट्टविरचितायां सरस्वतीकण्ठाभरणस्य
वृत्तौ सहृदयहारिण्यां द्वितीयस्याध्यायस्य
तृतीयः पादः



# INDEX OF SŪTRAS


अम्यङ्गि २. ३. ४०
अङ्किमस्जि २. ३. १४९
अङ्किवङ्कि २. १. २२४
अङ्गिजसि २. १. २३१
अङ्गितङ्गि २. २. १२४
अच इः २. १. १५२
अजिवृ २. १. ५६
अजेस्तृणे २. २. २०३
अज्यतिभ्यां २. १. १६९
अञ्चच् २. २. ८२
अञ्जेः २. १. ७८
अडो लश्च २. १. ११७
अणश्च २. १. ८
अतेरिथिः २. १. २०४
अतेर्धश्च २. १. २८३
अदि भुवो २. २. १४५
अदेर्नु २. १. ३४२
अदेर्मुट् २. १. २१३
अदेः किंश्चे २. १. २२७
अनसि वहेः २. १. ३४९
अनिकाम्यां २. ३. ६६
अनेरोकहः २. ३. १८६
अनेर्डित् २. २. ३५
अन्भ्ररन्भ २. ३. ३०
अपदुस्तु २. १. ३६
अभौ यामा २. १. १९६
अभ्रेरमुः २. १. ८६
अमिकमि २. १. ८५
अमिचिमिदि २. ३. ८३
अमियजि २. ३. ८६
अमेरतिः २. १. १९१
अमेरीवः २. ३. १३८
अमेर्गुः २. १. ४५
अमेर्णिद्वा २. २. २२०
अमेर्नित् २. ३. १७१
अमेर्भुक् २. १. ३३२
अमेर्वरट् २. ३. १६३
अर्चिरुचि २. १. ३११
अर्जेः ऋज २. १. १६
अर्तिकशि २. १. ८४
अर्तिपृवपि २. १. ३१६
अर्तिबुदोः २. २. १७२
अर्तीरिस्तु २. २. २४०
अर्तेरत्रिच् २. १. २१७
अर्तेरन्यत् २. ३. १९
अर्तेरुच्च २. १. ३३३
अर्तेरू च २. १. २२०
अर्तेर्मुक्षिनक् २. १. २९५

अर्तेः पिशन् २. ३. १४८
अर्त्यजिकृवृ २. २. १९९
अर्त्यवि २. १. ४९
अल्लशलोः २. २. २२१
अलिकलि २. २. १५
अलितलि २. २. २०७
अलिपुलि २. २. १६८
अलिशलि २. १. १६८
अलेरम्बुसः २. ३. १८२
अवतेर्मिः २. १. ३०२
अवतेर्ह्रस्वः २. २. २४५
अवितृस्तृ २. १. २४२
अविभूभ्यां २. १. १९८
अविमह्योः २. ३. १५५
अवे भृञः २. २. १५२
अवेर्धश्च २. २. २४९
अशिकशोः २. २. २३
अशिवहि २. ३. ८८
अशूप्रुषु २. ३. १२९
अशे रश च २. १. २२१
अशे रश च २. २. १८६
अशे रुट् २. ३. १७०
अशेरूपच् २. २. २१६
अशेर्नित् २. १. २३८
अशेर्नुम् २. १. १३
अभोतेर्डित् २. २. ५१
असिसञ्ज्यसिभ्यः २. १. २०१
असुन् २. १. ३२१
असेलरन् २. ३. ५३
अंहिकुण्ठि २. १. १५७
आङि च णित् २. १. २८७
आङि शुषेः २. १. २१५
आङि स्फायेः २. २. १५०
आडेरूपक् २. २. २१५
आण्डैरण्ड २. २. ११७
आपो २. १. ६०
आपो ह्रस्वश्च २. १. १४१
आपो ह्रस्वश्च २. २. १६४
आपो ह्रस्वो २. १. ३४१
आपः किन् २. १. २९८
इगुपधात् २. १. १५९
इडावत्सरः २. ३. ७१
इणस्तुट् च २. ३. १४३
इणो णित् २. १. ३१७
इणो दमिक् २. १. ३००
इणो नुट् च २. १ ३२९
इणः कित् २. २. २२८
इण् पूभ्यां २. ३. ६७
इण्भीकापा- २. २. २
इण्विधि २. १. ३४३
इण्शीङ् २. ३. १२७
इनुर्वि २. २. १२२
इन्धेर्नलोपश्च २. १. ३४०
इषिभिदि २. १. १९
इषिरुचि २. ३. ४६
इषेरुधक् २. २. १७७

| | |
|---|---|
| इषेः कित् | २. २. ४६ |
| इष्यसिभ्यां | २. २. ३८ |
| इष्वनिघृष्व | २. ३. १२८ |
| ईडेरविडि | २. १. २५६ |
| उचिकुसि | २. २. १४३ |
| उचेश्चक् | २. २. ७४ |
| उदके | २. १. ३३५ |
| उदके श्वेः | २. १. २६३ |
| उदिगायश्च | २. १. १४४ |
| उदिरुचि | २. २. १० |
| उन्देरि | २. १. ११ |
| उन्देर्नलोपश्च | २. २. १८७ |
| उन्देर्नलोपश्च | २. ३. १७२ |
| उभे द्वत्रौ | २. १. १५४ |
| उर्देर्धश्च | २. ३. १२५ |
| उषिकुषि | २. २. १५३ |
| उषिकुषि | २. २. २१० |
| उषिखनि | २. ३. ७९ |
| उषिरञ्जि | २. १. ३२४ |
| उषिशुषि | २. २. १७९ |
| उषेरधिः | २. १. २०५ |
| उषेर्जश्च | २. १. ३२६ |
| उषेर्नक् लोपश्च | २. ३. १६२ |
| ऊर्णोः | २. १. २४ |
| ऋकृमृवृ | २. ३. १०० |
| ऋक्षेरो | २. १. २६ |
| ऋचिरिषि | २. ३. १७० |
| ऋच्छेररः | २. ३. ३४ |
| ऋच्यलि | २. २. १९ |
| ऋजनोर्गुक् | २. ३. ९५ |
| ऋजिशृपृभ्यः | २. ३. १६१ |
| ऋतृस्रु | २. १. २१२ |
| ऋतेरं | २. १. १२६ |
| ऋपृकृपि | २. ३. १६४ |
| ऋषितनि | २. ३. ७२ |
| ऋषिवृषिभ्यां | २. २. २३१ |
| एतेस्तदिः | २. १. २७१ |
| एधिवहोः | २. १. ६५ |
| और्वेरा | २. १. १०१ |
| क उम्भक् | २. २. २३८ |
| ककिमकिभ्यां | २. २. १६७ |
| ककुप् | २. १. २९९ |
| ककेरुदन् | २. २. १७१ |
| ककेरुभः | २. २. २३५ |
| कच्छगुलुच्छ | २. २. ८५ |
| कटिपटि | २. ३. ११४ |
| कटेराहः | २. ३. १८७ |
| कटेर्नु | २. २. ९ |
| कठिचकिभ्यां | २. ३. ६२ |
| कणिकुलि | २. ३. १४६ |
| कदेर्णित् | २. २. २२४ |
| कनेरी चातः | २. ३. १४५ |
| कनेरीनकः | २. २. ३६ |
| कन्देरतः | २. १. १०३ |
| कपोलकल्लोल | २. ३. ११५ |
| कफ इलेः | २. १. १२१ |

| | |
|---|---|
| कमण्डलु | २. १. १०६ |
| कमितमि | २. २. ६६ |
| कमितिम्यो: | २. २. २२ |
| कमिमनि | २. १. ५८ |
| कमेरत उच्च | २. ३. ४४ |
| कम्पेरोतो | २. २. १४९ |
| कम्पेः नलोपश्च | २. ३. १०२ |
| करोतेरोटच् | २. २. १११ |
| कर्केरारुः | २. १. १०० |
| कलिस्फुलिभ्यां | २. २. ६३ |
| कलेरविङ्कः | २. २. ३२ |
| कलेरशच् | २. ३. १४२ |
| कलेरहः | २. ३. १८५ |
| कलेरेबरः | २. ३. ७५ |
| कलेर्मषक् | २. ३. १५२ |
| कलेर्वुगिच्चोपधायाः | २. ३. १५९ |
| कवेरचच् | २. २. ७५ |
| कशेरत | २. ३. ६३ |
| कश्यशिपच्चि | २. ३. १६८ |
| कषिकुलि | २. ३. ८ |
| कषेर्डित् | २. २. १४७ |
| कषेरछ | २. १. ११२ |
| कसिपद्यर्ति | २. १. ११६ |
| कसेरुच्चातः | २. २. २३९ |
| कसेरुच्चातः | २. २. २५३ |
| कायः किः | २. १. १७३ |
| किञ्जिमृजिभ्यां | २. ३. ४१ |
| किमि | २. १. ३ |
| किरतेराटक् | २. २. ९९ |
| किलेः कित् | २. ३. १७७ |
| किसलय | २. ३. ७ |
| कीकट | २. २. ९८ |
| कीचकार्भक | २. २. ११ |
| कुकमियमि | २. ३. ९६ |
| कुकेः कुक् | २. २. २३६ |
| कुगुध्वञ्चि | २. ३. ९८ |
| कुङो यषुट् | २. १. १८७ |
| कुचिञ्ञोः | २. १. १९० |
| कुटजोटज | २. २. ९२ |
| कुटिमहि | २. ३. १०७ |
| कुटयर्ति | २. १. ९९ |
| कुतुस्तूयि | २. २. ४ |
| कुथेरलमक् | २. २. २५२ |
| कुदकुको: | २. २. २५४ |
| कुदापाभ्यः | २. ३. १४० |
| कुपिकिति | २. ३. १३४ |
| कुपेर्दुक् | २. १. २२९ |
| कुरः पासः | २. ३. १७८ |
| कुरुवृषि | २. २. ६१ |
| कुलिमयिभ्यां | २. २. १४८ |
| कुलेरिजक् | २. २. ८९ |
| कुलेश्च माषक् | २. ३. १५३ |
| कुवश्चट् | २. २. ७१ |
| कुवोऽन्धच् | २. २. १७४ |
| कुवो वुक् | २. २. ८८ |
| कुशिविशिभ्यां | २. १. २२८ |

| | | | |
|---|---|---|---|
| कुसूलकुकूल | २. ३. ११९ | कृसृभृवृ | २. २. ७ |
| कुहेः कित् | २. २. २४ | कृसृभृवृ | २. २. ११६ |
| कृकणकुक्कण | २. २. १२६ | कृसृवृवि | २. २. ५ |
| कृकदिकडि | २. २. २२३ | कृहृभ्यां | २. १. ५७ |
| कृके वचः | २. १. ६ | कृगृघृजृ | २. ३. ३५ |
| कृञश्च | २. २. ७३ | कृगृशृ | २. १. १५६ |
| कृञश्चुक् | २. ३. ५६ | कृगृशृचति | २. ३. ७३ |
| कृञोऽलच् | २. २. ९० | कृप्रोल्व | २. १. २३ |
| कृञो मुट् च | २. ३. ४२ | कृतृभ्यामीषन् | २. ३. १६० |
| कृञोऽम्भच् | २. २. २३२ | कृपृव्रजि | २. २. १९० |
| कृञः कतुः | २. १. ६४ | कृशृवलि | २. २. २२९ |
| कृञः कन्धुक् | २. १. १२२ | कृशृवसि | २. १. १६६ |
| कृञः कित् | २. ३. १२ | कृशृशोडी | २. ३. ४८ |
| कृतिभिदि | २. २. ३७ | के शीङो | २. १. ११९ |
| कृतृकृपिभ्यः | २. २. १०३ | कैरवभैरव | २. ३. १३५ |
| कृतेः कतयोः | २. १. १७ | कैशीशमि | २. १. ३८ |
| कृतेः कृच्छ्रौ | २. ३. २८ | कौतेरियः | २. ३. ११ |
| कृपियुवलि | २. ३. १७६ | कौतेर्डिखिः | २. १. १७६ |
| कृपिविषि | २. २. १२७ | कौतेर्डिमिः | २. १. २०१ |
| कृबिमदि | २. ३. ५१ | कौ स्लृण्टि- | २. २. ८ |
| कृवापाजि | २. १. १ | क्यजिमामद्य | २. ३. ६८ |
| कृविलि | २. २. १३७ | क्रमितमि | २. १. १६१ |
| कृवृतॄस्यनि | २. २. १८२ | क्रमेरलकः | २. २. ३३ |
| कृशृकुसु | २. २. २०८ | क्रमेः क च | २. २. ७६ |
| कृशेः | २. १. ८० | क्रमेः क्रम् | २. २. २५ |
| कृषिचमि | २. १. ११० | क्रोष्टोरो | २. २. ३० |
| कृषेरादेश्च | २. १. २१४ | क्षणेर्दयिः | २. १. २२३ |
| कृसभृपृ | २. २. ९७ | क्षदेर्युक्ते | २. १. १४८ |

क्षिपिनदि २. १. ७९
क्षिपेः कित् २. १. २१६
खजिबलि २. २. १२
खञ्जेररीटः २. २. १०४
खण्डधज्योः २. १. १११
खनिकषि २. १. १५३
खनो २. १. ९४
खर्जिखडि २. ३. ५७
खलेरीनच् २. २. १९७
गन्धेररक् २. ३. १२६
गमेरा च २. ३. ८२
गमेरिनिः २. १. २८६
गमेर्डित् २. १. २५९
गमेः २. १. ५४
गमेः २. १. ७६
गम्यदिभ्यां २. २. ५५
गादाभ्यां २. २. १२९
गिरो भन् २. २. २२७
ग रः षुक् २. १. १८८
गुगम्यदि २. २. ८३
गुडेरूचक् २. २. ८०
गुधेरूमः २. २. २५५
गुरेर्जक् २. ३. ३७
गुरेः फक् २. २. २१७
गुलिविलि २. २. २४३
गुवः कित् २. २. १६५
गुवृवीपचि २. ३. ८५
गूवयूष २. २. १५७
गृभृस्तृभ्यः २. २. ५३
गृपृदुर्वी २. १. ३०३
गोपादिष्वनेरसिः २. १. २३९
ग्रसेरा २. २. २४१
ग्रसेर्डित् २. ३. १३९
ग्रीष्मघर्म २. २. २४७
ग्रो णित् २. २. ११०
ग्रो मुट् २. १. २६५
ग्लानुभ्यां २. १. १५१
घण्टाजटा २. २. ९६
घृसिल्लस् २. २. १३३
घृसधु २. १. २१०
चफिरभ्योः २. ३. २२
चक्षेरसिक् २. १. ३१८
चटिकठि २. १. ४०
चण्डिभल्लिभ्यां २. २. ४२
चतेरल्रन् २. १. ३०५
चदेरमसिः २. १. ३४८
चर्पेरेटच् २. २. १०९
चमेल्वातः २. १. १८१
चमेरूरुः २. १. १०४
चरेरिटच् २. २. १०१
चायः २. १. ५९
चिभ्योर्डोंचच् २. २. ८१
चुलुकोल्मुक २. २. २६
चूर्यगिभ्यां २. १. २०७
चेल्मन्योः २. १. ४२
छविस्थवि २. १. २३६

| | |
|---|---|
| छविरहो | २. १. ३३१ |
| छित्वरछत्वर | २. ३. ७४ |
| जठरपिठर | २. ३. ३९ |
| जनिजापुणि | २. ३. ३ |
| जनिमनि | २. १. ८७ |
| जनेरुसिः | २. १. ३१५ |
| जनर्षः | २. २. ६८ |
| जनेर्बुक् | २. १. १२० |
| जनेः | २. १. ९५ |
| जराजटा | २. १. ४ |
| जल्ेरापः | २. ३. १५४ |
| जायां मिञः | २. १. १३९ |
| जीवेरदा- | २. १. ८१ |
| जीवेरातुः | २. १. ६७ |
| जीवेरातृकन् | २. २. १ |
| जुकिजनि | २. २. ९५ |
| जृकमिरमि | २. २. ११४ |
| जृपृकृमस्जि | २. ३. १६६ |
| जृविशि | २. २. १३८ |
| जृवृभ्यां | २. २. १६२ |
| जृशृस्तृ | २. १. २३५ |
| झमेर्झः | २. २. ९३ |
| ञमन्ताड्डः | २. २. ११५ |
| टिकेष्टस्तुट् | २. २. २३४ |
| डिण्डन् | २. २. १०२ |
| डिण्डीरवानीर | २. ३. ५० |
| डिमेः कित् | २. २. २५१ |
| कुडुटिकशि | २. ३. १२० |
| तडेरागच् | २. २. ५८ |
| तनिमनि | २. १. ५१ |
| तनिमलि | २. ३. ५ |
| तनिमूह् | २. २. १३१ |
| तनेरनश्च | २. १. २४८ |
| तनेर्डिथिः | २. १. २०३ |
| तनेर्डुः | २. १. ७७ |
| तनेर्यक् | २. २. ६६ |
| तमिविडिमृणि | २. ३. १०१ |
| तम्यर्दिजीनां | २. ३. २६ |
| तरतेरक्षुः | २. १. १०९ |
| तरतेः | २. १. १५८ |
| तल्मिलि | २. ३. ५८ |
| तवेर्णिद्वा | २. ३. १५७ |
| ताडेर्णिलुक् | २. १. २६२ |
| तातव्रात | २. २. १३४ |
| तालेरीसच् | २. ३. १८० |
| तिजियुजि | २. २. २४४ |
| तिनिशेतिश | २. ३. १४७ |
| तुम्बेः | २. १. १०२ |
| तुल्वलेल्वल | २. ३. १२३ |
| तुवः कित् | २. १. २४६ |
| तुषिकुठिभ्यां | २. ३. ४३ |
| तृद्रोः | २. १. ११३ |
| त्यजितनि | २. १. २७० |
| त्रपेरलसच् | २. ३. १८१ |
| त्रादिभ्य उतः | २. ३. ८९ |
| त्रो रश्च | २. १. ५ |

॥ ८४ ॥ हृञो दोऽन्तश्च ॥ २. २६ ॥

अस्मात् कप्रत्ययो भवति। अस्य च दोऽन्तो भवति। अकार उच्चारणार्थः। यण्वद्भावादगुणत्वं च। "हृञ् हर[णे¹]" बुद्ध्या अर्थं हरतीति हृदयं मनः॥

॥ ८५ ॥ रातेर्डैः ॥ २. २७ ॥

अस्माड्डैप्रत्ययो भवति। डकारोऽन्त्यस्वरादिलोपार्थः। "रा ला आदाने" गुणान् रातीति राः। "रैः" इत्यात्वम्॥

॥ ८६ ॥ गमेर्डोः ॥ २. २८ ॥

अस्मात् डोः प्र[त्ययो भवति।] "गम्लृ गतौ" गच्छतीति गौः। "गोरौ घुटि" इत्यौत्वम्। दिगादिषु दशसु गोः॥

॥ ८७ ॥ ग्लानुदिभ्यां डौः ॥ २. २९ ॥

आभ्यां डौः प्रत्ययो भवति। "ग्लै हर्षक्षये" सन्ध्यक्षरान्तानामात्वम्। ग्ला[यतीति ग्लौः चन्द्रः॥] "णुद प्रेरणे" नुद्यते धीवरैः नौः तरी॥

॥ ८८ ॥ भ्रमेर्डूः ॥ २. ३० ॥

अस्मात् डूः प्रत्ययो भवति। "भ्रमु चलने" भ्रमतीति भ्रूः नेत्रोपरिस्थानम्॥

॥ ८९ ॥ दमेर्डोस् ॥ २. ३१ ॥

अस्मात् डोस्प्रत्ययो भवति। "दम उ[पशमने" दाम्यतीति] दोः भुजः॥

॥ ९० ॥ सर्तेरयूः ॥ २. ३२ ॥

अस्मादयूप्रत्ययो भवति। "सृ गतौ" सरतीति सरयूः सरित्॥

॥ ९१ ॥ शीङो धुक् ॥ २. ३३ ॥

अस्माद्धुक्प्रत्ययो भवति। "शीङ् स्वप्ने" शेते अनेनेति शीधुः सुराविशेषः॥

---

1. The words within brackets have been eaten away.

## ॥ ९२ ॥ [भुंजिमृङोः] युक्त्युकौ ॥ २. ३४ ॥

अनयोः धात्वोः युक्त्युक्प्रत्ययौ भवतः यथासङ्ख्यम् । "भुज पालनाभ्यवहारयोः" भुज्यते भुज्युः ओदनः ॥ "मृङ् प्राणत्यागे" म्रियते अनेनेति मृत्युः अन्तकः । अनयोः गुणो न भवति, औणादिकत्वात् ॥

## ॥ ९३ ॥ कॄपॄवृञ्निधाञ्भ्यो नः ॥ २. ३५ ॥

एभ्यो नः प्रत्ययो भवति । "कॄ विक्षेपे" किरतीति कर्णः श्रोत्रम् ॥ "पॄ पालने" पिपर्ति वृक्षं पर्णं दलम् ॥ "वृञ् वरणे" वृणोतीति वर्णः शुक्लादि ॥ "डु धाञ्" निपूर्वः । निधीयते निधानं निधिः ॥

## ॥ ९४ ॥ धृषेर्धिष च ॥ २. ३६ ॥

अस्मात् नः प्रत्ययो भवति धिषादेशश्च । "ञि धृषा प्रागल्भ्ये" धृष्णोत्यनया धिषणा बुद्धिः । धृष्णोतीति धिषणः बृहस्पतिः । इत्वविधानादेव न गुणः ॥

## ॥ ९५ ॥ हनेर्जघश्च ॥ २. ३७ ॥

अस्मात् नः प्रत्ययो भवति जघादेशश्च । "हन हिंसागत्योः" हन्ति चित्तमिति जघनं कटिप्रदेशः ॥

## ॥ ९६ ॥ दिवेः ऋन् ॥ २. ३८ ॥

दिवेर्धातोः ऋन्प्रत्ययो भवति । नकार उच्चारणार्थः । "दिवु" क्रीडादिषु । दीव्यतीति देवा पत्युर्भ्राता ॥

## ॥ ९७ ॥ नञि च नन्देः ऋदीर्घश्च ॥ २. ३९ ॥

अस्मात् नञि उपपदे ऋन्प्रत्ययो भवति, अस्य स्वरस्य दीर्घश्च । "टु नदि समृद्धौ" न नन्दतीति भ्रातृजायां ननान्दा पत्युर्भगिनी ॥

## ॥ ९८ ॥ यतेश्च ॥ २. ४० ॥

अस्मात् ऋन्प्रत्ययो भवति, अस्य स्वरस्य दीर्घश्च । "यति प्रयत्ने" यतत इति याता पतिभ्रातृभार्या ॥

---

1. The words within brackets have been eaten away.

## ॥ ९९ ॥ नियो डानुबन्धश्च ॥ २. ४१ ॥

अस्मात् ऋन्प्रत्ययो भवति, स च डानुबन्ध इष्यते, अन्त्यस्वरादेः लोपार्थम्। "णीञ् प्रापणे" नयतीति ना पुरुषः ॥

## ॥ १०० ॥ स्वस्रादयः ॥ २. ४२ ॥

स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृप्रशास्तृपितृमातृदुहितृजामातृभ्रातरः । एते ऋन्प्रत्ययान्ता निपात्यन्ते। "श्वस प्राणने" श्वसतीति स्वसा भगिनी ॥ "पत्लृ पथे च गतौ"। नञ्पूर्वः। न पतति कुलमनेनेति नप्ता पौत्रः ॥ "णश अदर्शने" नश्यति पापमनेनेति नेष्टा ऋत्विग्विशेषः ॥ "तक्षू त्वक्षू तनूकरणे" त्वक्षतीति त्वष्टा। अथवा "त्विष दीप्तौ" त्वेष्टि लोचने काष्ठेषु त्वष्टा सूत्रधारः ॥ "क्षुदिर् संपेषणे" क्षुदति पिनष्टि इति क्षत्ता प्रतीहारः ॥ "हु दाने" जुहोतीति होता याज्ञिकः ॥ "पूञ् पवने" पुनातीति पोता ऋत्विक् ॥ "शासु अनुशिष्टौ" प्रशास्तीति प्रशास्ता उपाध्यायः ॥ "पा रक्षणे" पातीति पिता जनकः ॥ "मा माने" मातीति माता जननी ॥ "दुह प्रपूरणे" दोग्धि मातृकुलं दुहिता ॥ "जनीङ् प्रादुर्भावे" पुत्र-प्रतिनिधिः जायते जामाता दुहितुः पतिः ॥ "भ्राजृ दीप्तौ" भ्राता ॥

## ॥ १०१ ॥ ऋतसृधृञ्धम्यश्यविवृतिग्रहिभ्योऽनिः ॥ २. ४३ ॥

एभ्योऽनिप्रत्ययो भवति। "ऋ गतौ" इयर्तीति अरणिः अग्नि-निर्मन्थनकाष्ठम् ॥ "तॄ प्लवनतरणयोः" तरत्यनेनेति तरणिः नौः सूर्यो वा ॥ "सृ गतौ" सरतीति सरणिः मार्गः ॥ "धृञ् धारणे" धरतीति धरणी पृथ्वी ॥ "धम" इति सौत्रोऽयं धातुः। धमतीति धमनिः गलशिरा ॥ "अश भोजने" पर्वतादीनश्नातीति अशनिः वज्रम् ॥ "अव रक्ष पालने" अवतीति अवनिः पृथ्वी ॥ "वृतु वर्तने" वर्तते वर्तनिः वर्तनोपकरण-द्रव्यम् ॥ "ग्रह उपादाने" गृह्णातीति ग्रहणिः व्याधिविशेषः ॥

## ॥ १०२ ॥ अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः ॥ २. ४४ ॥

एभ्यो धातुभ्य इसिप्रत्ययो भवति। इकार उच्चारणार्थः। "अर्च

पूजायाम्" अर्च्यते पूज्यते अर्चिः ज्वाला ॥ "शुच शोके" शोचते तमोऽत्र शोचिः दीप्तिः ॥ "रुच दीप्तौ" रोचते रोचिः सैव ॥ "हु दाने" हूयत इति हविः देवान्नम् ॥ "सृ पृ गतौ" सप्त धातवः सर्पन्त्यनेन सर्पिः आज्यम् ॥ "छद संवरणे" रुचादित्वादिन् । छादयतीति छदिः कुड्मलं कुटीरकं वा ॥ "छर्द वमने" छर्दते छर्दिः वमनम् ॥

## ॥ १०३ ॥ ज्योतिरादयः ॥ २. ४५ ॥

ज्योतिस् बर्हिस् इत्येवमादयः शब्दाः इसिप्रत्ययान्ता निपात्यन्ते । "द्युत शुभ रुच दीप्तौ" द्योतते ज्योतिः दीप्तिः ॥ "बृहि वृद्धौ" बृहतीति बर्हिः कुशः । एवमन्येऽप्यनुसर्तव्याः ॥

## ॥ १०४ ॥ ऋपॄवपिचक्षिजनितनिधनिभ्य उस् ॥ २. ४६ ॥

एभ्य उस्प्रत्ययो भवति । "ऋ गतौ" इयर्तीति अरुः व्रणम् ॥ "पॄ पालनपूरणयोः" पृणातीति परुः पर्वतः ॥ "डु वप् बीजसन्ताने" उप्यते पुरुषार्थोऽनेनेति वपुः शरीरम् ॥ "चक्षुङ् व्यक्तायां वाचि" चष्टे हृदयाभिप्रायं चक्षुः । ख्यानेरनुपादानात् चक्षुङ् ख्याञ् इति न भवति ॥ "जन जनने" जजन्तीति [जनुः][1] जर्जारिः ॥ "तनु विस्तारे" तनोतीति तनुः कायः ॥ "धन धान्ये" धन्यते धनुः शरासनम् ॥

## ॥ १०५ ॥ एतेरिज्वत् ॥ २. ४७ ॥

अस्मादुस्प्रत्ययो भवति । स च इज्वत् । "इण् गतौ" एतीति आयुः जीवितम् ॥

## ॥ १०६ ॥ चतिकटश्रृवृञ्भ्यष्ट्वरः ॥ २. ४८ ॥

एभ्यः ट्वरप्रत्ययो भवति । टकारो नदाद्यर्थः । "चते चदे च" चतते चत्वरं चतुर्णां पथां समुदायः, प्राङ्गणम् ॥ "कट गतौ" कटतीति कट्वरः दधिविकारः ॥ "शॄ हिंसायाम्" शृणातीति शर्वरः त्रियामा । नदादित्वात् शर्वरी, रात्रिः ॥ "वृञ् वरणे" वृणाति वृणोति वा बर्बरः देशविशेषः मनुष्यश्च ॥

---

1. The word within brackets is omitted in the original.

॥ १०७ ॥ नौ सदि ॥ २. ४९ ॥

नावुपपदे अस्मात् ट्वरप्रत्ययो भवति । "षद्लृ विशरणे" । "धात्वादेः षः सः" । निपूर्वः । निषीदत्यस्मिन् लोको निषद्वरः कर्दमः ॥

॥ १०८ ॥ छित्वरादयः ॥ २. ५० ॥

छित्वरछत्वरधीवरतीवरपीवरगह्वरचीवरनीवराः । एते वरप्रत्ययान्ता निपात्यन्ते । "छिदिर् द्विधाकरणे" छिनत्तीति छित्वरः धूर्तः ॥ "छद षद छादने" छादयतीति छत्वरः स एव ॥ "डु धाञ्" दधाति जालमिति धीवरः कैवर्तः ॥ "तुद व्यथने" तुदतीति तीवरः प्राकृतजातिविशेषः ॥ "पीङ् पाने" पीयते पीवरः स्थूलः ॥ "गुहू संवरणे" गुहतीति गह्वरं गहनम् ॥ "चिञ् चयने" चिनोतीति चीवरं भिक्षुपरिधानम् ॥ "णीञ् प्रापणे" नयतीति नीवरः जलसंभवः कश्चित् । एवमन्येऽप्यनुसर्तव्याः ॥

॥ १०९ ॥ इण्जिकृषिभ्यो नक् ॥ २. ५१ ॥

एभ्यो नक्प्रत्ययो भवति । ककारो यण्वद्भावार्थः, तेनागुणत्वम् । "इण् गतौ" एतीति इनः सूर्यः धनेश्वरो वा ॥ "जि जये" जयतीति जिनः तीर्थङ्करो विष्णुर्वा ॥ "कृष विलेखने" कर्षत्यरीन् कृष्णः वासुदेवः ॥

॥ ११० ॥ बन्धेर्ब्रधिश्च ॥ २. ५२ ॥

अस्मान्नक्प्रत्ययो भवति ब्रध्यादेशश्च । इकार उच्चारणार्थः । "बध बन्धने" बध्नाति जन्तुदृष्टीन् ब्रध्नः सूर्यः ॥

॥ १११ ॥ धावसिद्रुभ्यो नः ॥ २. ५३ ॥

एभ्यो नप्रत्ययो भवति । "डु धाञ्" धार्यन्ते धानाः; स्त्रीत्वं बहुत्वं च; भ्रष्टयवाः ॥ "वस निवासे" वसतीति वस्नम् अवक्रयणम् ॥ "द्रु गतौ" द्रवतीति द्रोणः परिमाणविशेषः अश्वत्थश्च । आम्रः पीतो वा ॥

॥ ११२ ॥ रास्ना सास्ना स्थूणा वीणा ॥ २. ५४ ॥

एते नप्रत्ययान्ता निपात्यन्ते । "राशृ शब्दे" राश्यते प्राणी अनया रास्ना औषधविशेषः ॥ "शासु अनुशिष्टौ" शास्यते अनया सास्ना गल-

कम्बकः ॥ "ष्ठा गतिनिवृत्तौ" तिष्ठति पदार्थोऽस्यां स्थूणा स्तम्भः ॥ "वि प्रजने" ससस्वरान् वेति गच्छतीति वीणा परिवादिनी । आकारस्य ऊत्वं नस्य णत्वं भवति ॥

## ॥ ११३ ॥ पातेः पः ॥ २. ५५ ॥

अस्मात् पः प्रत्ययो भवति । "पा रक्षणे" पायते पापं दुरितम् ॥

## ॥ ११४ ॥ नीपादयः ॥ २. ५६ ॥

नीपयूपसूपकूपतल्पशष्पबाष्पाः । एते पप्रत्ययान्ता निपात्यन्ते । "णीञ् प्रापणे" नयतीति नीपः वृक्षः ॥ "यु मिश्रणे" यौतीति यूपः यज्ञकीलकः ॥ "षूङ् प्राणिप्रसवे" सूयते सूपः व्यञ्जनविशेषः ॥ "कुङ् शब्दे" कवते कुवते वा कूपः प्रथिः ॥ "तल प्रतिष्ठायाम्" चुरादिः । तालयतीति तल्पं शय्या ॥ "शसु हिंसायाम्" शस्यते भक्ष्यते इति शष्पं बालतृणम् ॥ "वासृ शब्दे" वास्यते बाष्पः अश्रु ऊष्मोद्गमश्च । एवमन्येऽप्यनुसर्तव्याः ॥

## ॥ ११५ ॥ इण्भीकापाशल्यर्चिकृदाधाराभ्यः कः ॥ २. ५७ ॥

एभ्यः कप्रत्ययो भवति । "इण् गतौ" एतीति एकः असहायः ॥ "ञि भी भये" सर्पात् बिभेति भेकः मण्डूकः ॥ "कै शब्दे" कायतीति काकः ॥ ["पा पाने" पिबतीति पाकः][1] ॥ ["शल गतौ" शलतीति] शल्कः वल्कलम् । शल्यर्चिभ्यां इट् न भवति औणादिकत्वात् । एवमन्यत्रापि उक्तवक्ष्यमाणविधौ[धिषु] प्रतिपत्तव्यम् । "अर्चि पूजायाम्" अर्च्यते अर्कः रविः ॥ "डु कृञ् करणे" क्रियते कल्कः । कपिलिकादिदर्शनात् रेफस्य लत्वम्; पिष्टपिण्डः ॥ "डु दाञ्" ददातीति दाकः दाता ॥ "डु धाञ्" धार्यते धाकः यज्ञः ॥ "रा ला दाने" रातीति राकः कर्णः; राका चन्द्रसंपूर्णा पौर्णमासी ॥

## ॥ ११६ ॥ मूकादयः ॥ २. ५८ ॥

मूकयूकार्भकपृथुकवृकस्तृकमूकाः । एते कप्रत्ययान्ता निपात्यन्ते । "मूङ् बन्धने" मूयते मूकः जडः ॥ "यु मिश्रणे" यूयते यूका क्षुद्रजन्तुः ॥

---

1. The words within brackets are omitted in the ms.

"अर्ह मह पूजायाम्" अर्हतीति अर्भकः शिशुः ॥ "प्रथ प्रख्याने" प्रथयतीति पृथुकः स एव ॥ "वृञ् आवरणे" वृणोतीति वृकः मृगविशेषः ॥ "सृ गतौ" सरतीति सृकम् उत्पलमूलम् ॥ "भू सत्तायाम्" भवतीति भूकं छिद्रम् ॥

॥ ११७ ॥ शक्केरुन्युन्तौ ॥ २. ५९ ॥

अस्मात् उनि उन्त इत्येतौ प्रत्ययौ भवतः । "शकॢ शक्तौ" नभसा गन्तुं शक्नोतीति शकुनिः पक्षी । एवं शकुन्तः स एव ॥

॥ ११८ ॥ ऋकृतृवृञ्यमिदार्यर्जिभ्य उनः ॥ २. ६० ॥

एभ्य उनप्रत्ययो भवति । "ऋ गतौ" इयर्तीति अरुणः सूर्यसारथिः॥ "डु कृञ् करणे" क्रियते करुणा कृपा ॥ "तृ प्लवनतरणयोः" क्रियां कर्तुं तरति शक्नोतीति तरुणः युवा ॥ "वृञ् वरणे" वृणोतीति वरुणः पश्चिमदिक्पतिः ॥ "यम उपरमे" यच्छतीति यमुना कालिन्दी नदी ॥ "दृ विदारणे" हेताविन् । दारयतीति दारुणः रौद्रः ॥ "अर्ज सर्ज अर्जने" अर्जतीति अर्जुनः वृक्षः पाण्डवश्च ॥

॥ ११९ ॥ पिशुनफाल्गुनौ ॥ २. ६१ ॥

एतौ उनप्रत्ययान्तौ निपात्येते । "पिषॢ संचूर्णने" पिनष्टीति पिशुनः सूचको दुर्जनश्च ॥ "फल निष्पत्तौ" फलतीति फाल्गुनः मासविशेषः अर्जुनश्च ॥

॥ १२० ॥ कृधूवाभ्यः सरक् ॥ २. ६२ ॥

एभ्यः सरक्प्रत्ययो भवति । को यण्वत् । तेनागुणत्वम् । "डु कृञ् करणे" करोतीति कृसरा यवागूः ॥ "धू विधूनने" धुवतीति धूसरः अग्निस्निग्धः ॥ "वा गतिगन्धनयोः" वातीति वासरः दिवसः ॥

॥ १२१ ॥ भीशीङ्भ्यामानकः ॥ २. ६३ ॥

आभ्यामानकः प्रत्ययो भवति । "ञि भी भये" भीयते अस्मिन्निति भयानकः भीष्मः ॥ "शीङ् स्वप्ने" शेते शयानकः अजगरः ॥

## ॥ १२२ ॥ शिङ्घेराणकः ॥ २. ६४ ॥

अस्माद्राणकप्रत्ययो भवति । "शिघि आघ्राणे" इदनुबन्धत्वान्नागमः । शिङ्घाणकः नासामलः ॥

## ॥ १२३ ॥ इषेः किकः ॥ २. ६५ ॥

अस्मात् किकप्रत्ययो भवति । को यण्वद्भावार्थः । "इषु इच्छायाम्" इच्छतीति इषिका विरुणीशलाका ॥

## ॥ १२४ ॥ तिन्तिडिकादयः ॥ २. ६६ ॥

तिन्तिडिका किङ्किणिका [जर्जरिका][1] पर्परिका मृद्रिका । एते किकप्रत्ययान्ता निपात्यन्ते । ["तिमे आर्द्रीभावे"] तिम्यतीति तिन्तिडिका तिलवृक्षविशेषः ॥ "कण क्वण शब्दे" किम्पूर्वः । किङ्क्वणतीति किङ्किणिका ॥ "जॄ वयोहानौ" जीर्यते इति जर्जरिका बहुच्छिद्रा ॥ "पॄ पालनपूरणयोः" पृणातीति पर्परिका मर्दलः ॥ "मृद क्षोदे" मृद्नातीति मृद्रिका । एवमन्येऽपि ॥

## ॥ १२५ ॥ घृसिदूभ्यः क्तः ॥ २. ६७ ॥

एभ्यः क्तप्रत्ययो भवति । "घृ क्षरणदीप्त्योः" घरतीति घृतं सर्पिः ॥ "षिञ् बन्धने" सिनोतीति सितः शुक्लः ॥ "दूङ् परितापे" दूयते दूतः सङ्गमकारकः । ककारो यण्वद्भावार्थः । तेनागुणत्वम् ॥

## ॥ १२६ ॥ जर्ततातपलितसुरतलोष्टाः ॥ २. ६८ ॥

एते क्तप्रत्ययान्ता निपात्यन्ते । "जॄषु झॄषु" जीर्यते जर्तः दीर्घरोमा ॥ "देङ् त्रैङ् पालने" सन्ध्यक्षरान्तानामात्वम् । त्रायते तातः पिता ॥ "डु पचष् पाके" पच्यते पलितं पक्वकेशाः ॥ "रमु क्रीडायाम्" सुपूर्वः । सुखाय रम्यते सुरतं मैथुनम् ॥ "लुष हिंसायाम्" चुरादिः । लूषयतीति लोष्टः मृत्पिण्डः ॥

---

1. The words within brackets are omitted in the ms.

॥ १२७ ॥ स्पृहेराय्यः ॥ २. ६९ ॥

अस्मादाय्यप्रत्ययो भवति । "स्पृह ईप्सायाम्" चुरादित्वादिन् । स्पृहयतीति स्पृहयाय्यं गवीनं घृतं वा ॥

इति दौर्गसिंह्यामुणादिवृत्तौ
द्वितीयः पादः ॥

---

## ॥ अथ तृतीयः पादः ॥

### ॥ १२८ ॥ वृञ एण्यः ॥ ३. १ ॥

अस्मादेण्यप्रत्ययो भवति । "वृञ् वरणे" वृणोतीति वरेण्य श्रेष्ठः ॥

### ॥ १२९ ॥ अर्तेरन्यः ॥ ३. २ ॥

अस्मादन्यप्रत्ययो भवति । "ऋ गतौ" अर्यते अरण्यं वनम् ॥

### ॥ १३० ॥ ह्रो हिरश्च ॥ ३. ३ ॥

अस्मादन्यप्रत्ययो भवति, हिरादेशश्च । "ओ हाक् त्यागे" हीयते हिरण्यं सुवर्णम् ॥

### ॥ १३१ ॥ पर्जन्यपुण्ये ॥ ३. ४ ॥

एतौ अन्यप्रत्ययान्तौ निपात्येते । "पृची संपर्के" पृङ्क्ते पृणक्ति वा पर्जन्यः इन्द्रः ॥ "पुण शोभे" पुणतीति पुण्यं धर्मकर्म ॥

### ॥ १३२ ॥ अमिनक्षिकडिभ्योऽत्रः ॥ ३. ५ ॥

एभ्योऽत्रप्रत्ययो भवति । "अम रोगे" अमतीति अमत्रं भाजनम् ॥ "नक्ष गतौ" नक्षतीति नक्षत्रं अश्विन्यादि ॥ "कड मदे" कडतीति कडत्रं चर्मासनम् । "लडयोः" इत्यैक्यात् कलत्रं भार्या नपुंसकलिङ्गे च ॥

### ॥ १३३ ॥ भृञोऽतः ॥ ३. ६ ॥

अस्मादतप्रत्ययो भवति । "डु भृञ्" बिभर्तीति भरतः राजा प्रथमतीर्थङ्करपुत्रो नटो वा ॥

### ॥ १३४ ॥ पृषिरञ्जिभ्यां यण्वत् ॥ ३. ७ ॥

आभ्यामतप्रत्ययो भवति, स च यण्वत् । "पृषु वृषु" पृषतीति

पृषतः कस्तूरीमृगः ॥ "रञ्ज रागे" ननं रञ्जतीति रजतं रौप्यम्। नगुणत्वमनुषङ्गलोपः ॥

॥ १३५ ॥ आङि वसेरथः ॥ ३. ८ ॥

आङि उपपदे वसेरथप्रत्ययो भवति। "वस निवासे" आङ्पूर्वः। आवसति लोकोऽस्मिन्निति आवसथं गृहम् ॥

॥ १३६ ॥ जॄवृभ्यामूथः ॥ ३. ९ ॥

आभ्यामूथप्रत्ययो भवति । "जॄ वयोहानौ" जीर्यते जरूथम् आर्द्रमांसम् ॥ "वृञ् वरणे" वृणोतीति वरूथं रथगोपनम् ॥

॥ १३७ ॥ अतिचमिरभियुभ्योऽसः ॥ ३. १० ॥

एभ्योऽसः प्रत्ययो भवति। "अत सातत्यगमने" अततीति अतसी। नटादित्वादिः। क्षुमा ॥ "चमु छमु जमु" ..[चम]तीति चमसं यज्ञोपकरणम् ॥ "रभ रामस्ये" रमते रभसः उत्साहः ॥ "यु मिश्रणे" यौतीति यवसः घासः ॥

॥ १३८ ॥ वेतसवाहसदिवसफनसाः ॥ ३. ११ ॥

एते असप्रत्ययान्ता निपात्यन्ते। "वि प्रजने" वेतीति वेतसः वानीरः ॥ "वह प्रापणे" वहतीति वाहसः अजगरः ॥ "दिवु" क्रीडादिषु । दीव्यतीति दिवसः दिनम् ॥ "फण गतौ" फणते फनसः वृक्षविशेषः ॥

॥ १३९ ॥ कृश्टृशलिगर्दिरासिवलिवल्लिभ्योऽभः ॥ ३. १२ ॥

एभ्योऽभप्रत्ययो भवति । "डु कृञ् करणे" करोति वेगमिति करभः उष्ट्रः । कपिरिकादित्वाल्लत्वम् । कलभः बालहस्ती ॥ "शॄ हिंसायाम्" शृणातीतिशरभः अष्टापदजीवविशेषः ॥ "शल श्वल आशुगतौ" "शल चलने वा" शलतीति शलभः पतङ्गः ॥ "नर्द गर्द शब्दे" गर्दतीति गर्दभः खरः ॥ "रस शब्दे" हेताविन्। रसतीति रासभः स एव ॥ "वल वल्ल च" वलतीति वलभिः। नटादित्वादिः। गृहाणामाच्छादनम् ॥ "वल वल्ल" च। वल्लतीति वल्लभः हृदयः ॥

## ॥ १४० ॥ ऋषिवृषिभ्यां यण्वत् ॥ ३. १३ ॥

आभ्यामभप्रत्ययो भवति । स च यण्वत् । "ऋष्टि ऋषि गतौ" ऋषतीति ऋषभः नाभेयो जिनः, गन्धर्वस्वरविशेषो वा ॥ "पृषु वृषु उक्ष सेचने" वर्षतीति वृषभः गौः ॥

## ॥ १४१ ॥ इः सर्वधातुभ्यः ॥ ३. १४ ॥

सर्वधातुभ्यो यथासङ्ख्यं इः प्रत्ययो भवति । "क्षु रु शब्दे" रौतीति रविः सूर्यः ॥ ["कुं शब्दे"] कौतीति कविः काव्यकर्ता शुक्रश्च ॥ "दॄ विदारणे" दृणातीति दरिः गुहा । "ध्वन शब्दे" ध्वनतीति ध्वनिः शब्दः ॥ "वल वल्ल च" वलंतीति बलिः दैत्यविशेषः ॥ वल्लते वल्लिः लता । स्त्रीयां ई । वल्ली ॥ "अव रक्ष पालने" ऊर्णाभिरात्मानमवतीति अविः मेषः ॥ "सर्जि छपि पथि गतौ" चौरादिः । इदनुबन्धत्वान्नागमः । पन्थयतीति पन्थाः मार्गः ॥ "मन्थ विलोडने" मन्थतीति मन्था मथनदण्डः । पन्थिमन्थ्यादीनामात्वम् ॥ "हृञ् हरणे" हरतीति हरिः विष्णुः अक्कादिषु ॥

## ॥ १४२ ॥ गृनाम्न्युपधात् क्विः ॥ ३. १५ ॥

गिरतेः नाम्न्युपधातोश्चधातोः किःप्रत्ययो भवति । नाम्नि उपधा यस्येति विग्रहः । "गॄ निगरणे" गिरतीति गिरिः पर्वतः ॥ "रुच दीप्तौ" रोचते रुचिः अभिलाषः ॥ "दिपि दीप्तौ" दीप्यत इति दीपिः ॥ "कृष विलेखने" कर्षतीति कृषिः कर्षणम् ॥ "घृणु दीप्तौ" घृणोतीति घृणिः दीप्तिः इत्यादयोऽप्यनुसर्तव्याः ॥

## ॥ १४३ ॥ गण्डिमण्डिभ्यो झः ॥ ३. १६ ॥

आभ्यां झप्रत्ययो भवति । "गडि वदनैकदेशे" इदनुबन्धत्वान्नागमः । हेताविन् । गण्डयतीति गण्डयन्तः भूषणम् ॥ "मडि भूषायाम्" मण्डयतीति मण्डयन्तः ॥

---

1. The words within brackets are omitted in the ms.

## ॥ १४४ ॥ जीविशिवसिभासिवहिनन्दिहिसाधिभ्यश्च ॥ ३. १७ ॥

एभ्यो झप्रत्ययो भवति । "जि जये" जयतीति जयन्तः इन्द्रपुत्रः ॥ "विश प्रवेशने" विशति लोकोऽस्मिन्निति वेशन्तः पल्वलम् ॥ "वस निवासे" वसति लोकोऽस्मिन्निति वसन्तः ऋतुराजः ॥ "भासृ दीप्तौ" भासतीति भासन्तः शोभनम् ॥ "वह प्रापणे" वहतीति वहन्तः कालः ॥ "टु नदि समृद्धौ" नन्दतीति नन्दन्तः बुद्धिमान् हृष्टो वा ॥ "हि गतौ" हिनोतीति हेमन्तः ऋतुविशेषः ॥ "राध साध संसिद्धौ" साध्यतीति साधन्तः भिक्षुः ॥

## ॥ १४५ ॥ कुङोररक् ॥ ३. १८ ॥

अस्मादरक्प्रत्ययो भवति । "कुङ् शब्दे" कवते कुररः पक्षी । स्त्रियां तु कुररी ॥

## ॥ १४६ ॥ अङ्गिमदिमन्थिकडिमृजिभ्य आरः ॥ ३. १९ ॥

एभ्य आरप्रत्ययो भवति । "अगि" गत्यर्थः । अङ्गतीति अङ्गारः दग्धकाष्ठम् ॥ "मदी हर्षे" मद्यते मदारः मत्तहस्ती ॥ "मदि" स्तुत्यादौ । मन्दते मन्दारः वृक्षः ॥ "कड मदे" कडतीति कडारः पिङ्गलः ॥ "मृजू शुद्धौ" आत्वर्थे गृहं मार्ष्टीति मार्जारः बिडालः ॥ 'कनीनका' इत्यादौ "अकि" गत्यर्थः । अङ्कते शृङ्गारः रसविशेषः । कस्य गत्वं रेफस्य ऋत्वम् ॥ "भृञ्" बिभर्ति जलमिति भृङ्गारः जलस्थानम् । न्वात्वागमो गोन्तश्च । "कूज अव्यक्त शब्दे" कूजते कुञ्जरः हस्ती ॥ कूजेः परस्याकारस्य ह्रस्वत्वम्; जकारात्पूर्वो नागमः; ऊकारस्य उकारः ॥

## ॥ १४७ ॥ सर्तेरपष्षोऽन्तश्च ॥ ३. २० ॥

अस्मादपप्रत्ययो भवति षोऽन्तश्च । "सृ गतौ" सरतीति सर्षपः सिद्धार्थः ॥

## ॥ १४८ ॥ विटपादयः ॥ ३. २१ ॥

विटपकुणपकुडपदलपोलपाः । एते अपप्रत्ययान्ता निपात्यन्ते । “विट शब्दे” विटतीति विटपः स्तम्भः ॥ “कुण शब्दे” कुणतीति कुणपः शवः ॥ “कुट कौटिल्ये” कुटतीति कुटपः मानविशेषः ॥ “दल वि फला” दलतीति दलपः प्रहरणम् ॥ “ऋ गतौ” इयर्तीति उलपः तृणविशेषः । एवमन्येऽप्यनुसर्तव्याः ॥

## ॥ १४९ ॥ वृतेस्तिकः ॥ ३. २२ ॥

अस्मात्तिकप्रत्ययो भवति । “वृतु वर्तने” वर्तत इति वर्त्तिका दीपाश्रयः । चटिका वा स्त्रिया मादा [?] ॥

## ॥ १५० ॥ कृतिभिदिलतिभ्यो यण्वत् ॥ ३. २३ ॥

एभ्यस्तिकप्रत्ययो भवति; स च यण्वत्; तेनागुणत्वम् । “कृती छेदने” शुभं कृन्ततीति कृत्तिका: । स्त्रीत्वं बहुत्वं च । बहुला ॥ “भिदिर् विदारणे” भिनत्तीति भित्तिका कुड्यम् ॥ “लत” इति सौत्रोऽयं धातुः । लततीति लत्तिका गोधा ॥

## ॥ १५१ ॥ इष्यसिभ्यां तकः ॥ ३. २४ ॥

आभ्यां तकप्रत्ययो भवति ।................[इष्टका ॥ अष्टका ॥]

## [॥ १५२ ॥ दॄगॄभ्यां भः ॥ ३. २५ ॥][1]

“दॄ विदारणे” दृणातीति दर्भः कुशः पवित्रकरणम् ॥ “गॄ निगरणे” नाभिनालेन मातुराहारं गिलतीति गर्भः प्रसिद्धप्रसूतिकारणम् ॥

## ॥ १५३ ॥ इणो यण्वत् ॥ ३. २६ ॥

अस्माद्भप्रत्ययो भवति; स च यण्वत् । “इण् गतौ” एति गच्छतीति इभः हस्ती ॥

1. This sūtra is omitted in the Ms.

## ॥ १५४ ॥ विपतिभ्यां तनः ॥ ३. २७ ॥

आभ्यां तनप्रत्ययो भवति । " वि प्रजने " वीयते अनया वेतना भृतकमूल्यम् ॥ " पत्लृ " पतति लोकोऽस्मिन्निति पत्तनं नगरम् ॥

## ॥ १५५ ॥ सञ्ज्यसिभ्यां क्थिः ॥ ३. २८ ॥

आभ्यां क्थिः प्रत्ययो भवति । तकारो यण्वद्भावार्थः; तेनागुणत्वम् । षञ्जेरनुषङ्गलोपः । " षञ्ज सङ्गे " सज्जतीति सक्थि ऊरु ॥ " असु क्षेपणे " अस्यते क्षिप्यते; " अन " मज्जादे वा नात्र [?] अस्थि शरीरावयवः ॥

## ॥ १५६ ॥ सारेरथिः ॥ ३. २९ ॥

अस्मादथिप्रत्ययो भवति । " सृ गतौ " । हेताविन् । अश्वान् सारयतीति सारथिः रथवाहः ॥

## ॥ १५७ ॥ अङ्ग्यतिभ्यामुलिथिः ॥ ३. ३० ॥

इदित्वान्नागमः । " अगि " गत्यर्थः । अङ्गतीति अङ्गुलिः करावयवः ॥ " अत सातत्यगमने " अततीति अतिथिः अभ्युरः[आगन्तुकः] ॥

## ॥ १५८ ॥ निदलिभ्यां मिः ॥ ३. ३१ ॥

आभ्यां मिप्रत्ययो भवति । " णीञ् प्रापणे " नयति शकटं नेमिः चक्रधारा ॥ " दल ञि फला " दलत्यरीन् इति दल्मिः शक्रायुधम् ॥

## ॥ १५९ ॥ ऊर्मिभूमिरश्मयः ॥ ३. ३२ ॥

एते मिप्रत्ययान्ता निपात्यन्ते । " ऋ गतौ " इयर्तीति ऊर्मिः भङ्गः ॥ " भू सत्तायाम् " भवति सर्वत्र भूमिः पृथ्वी ॥ " राशृ शब्दे " राशतीति रश्मिः किरणः ॥

## ॥ १६० ॥ इषेः सुक् ॥ ३. ३३ ॥

इषेर्धातोः सुक्प्रत्ययो भवति । "इषु इच्छायाम्" इष्यते इक्षुः मधुरद्रव्यविशेषः ॥

## ॥ १६१ ॥ अवितृस्तृतन्त्रिभ्य ईः ॥ ३. ३४ ॥

एभ्य ईप्रत्ययो भवति । "अव रक्ष पालने" पुत्रार्थं रजोऽवतीति अविः रजस्वला ॥ "तॄ प्लवनतरणयोः" तीर्यतेऽनया तरिः नौः ॥ "स्तृञ् आच्छादने" स्तृणातीति स्तरी आच्छादनविशेषः ॥ "तन्त्रि कुटुम्बधारणे" तन्त्रयतीति तन्त्री वीणा ॥

## ॥ १६२ ॥ लक्षेर्मोऽन्तश्च ॥ ३. ३५ ॥

अस्मादीप्रत्ययो भवति, मोऽन्तश्च । "लक्ष दर्शनाङ्कनयोः" लक्षयति दर्शयति पुण्यकर्माणं लक्ष्मीः ॥

## ॥ १६३ ॥ वातप्रमीः ॥ ३. ३६ ॥

अयमीप्रत्ययान्तो निपात्यते । वातप्रपूर्वे "मा माने" वातं प्रमातीति वातप्रमीः वातवाहनो मृगः ॥

## ॥ १६४ ॥ कृगॄजागृभ्यः क्रिः ॥ ३. ३७ ॥

एभ्यः क्रिप्रत्ययो भवति । को यण्वत् । "डु कृञ् करणे" करोतीति कुर्विः ॥ "गॄ निगरणे" गिरतीति गिर्विः । छान्दसावेतौ रविचन्द्रौ ॥ "जागृ निद्राक्षये" जागर्तीति जागृविः अग्निः ॥

## ॥ १६५ ॥ छव्यादयः ॥ ३. ३८ ॥

छविदर्विस्थविदीदिविकिकिदीवयः । एते क्विप्रत्ययान्ता निपात्यन्ते । "छो छेदने" छ्यतीति छविः कान्तिः ॥ "दॄ विदारणे" दृणातीति दर्विः दर्वीः ॥ "ष्ठा गतिनिवृत्तौ" तिष्ठतीति स्थविः तन्तुवायद्रव्यम् ॥ "दिवु" क्रीडादिषु । दीव्यतीति दीदिविः स्वर्गः द्विर्वचनम् ॥ [[1]"दिवु" क्रीडादिषु । किकिपूर्वः । किकिदीविः] । पक्षिविशेषः ॥

---

1. The words within brackets are omitted in the Ms.

॥ १६६ ॥ खञ्जेरकः ॥ ३. ३९ ॥

अस्मादकप्रत्ययो भवति । "खजि मन्थे" खञ्जतीति खञ्जकः पक्षी ॥

॥ १६७ ॥ बलाकादयः ॥ ३. ४० ॥

बलाकपिनाकपताकश्यामाकशलाकाः । एते अकप्रत्ययान्ता निपात्यन्ते । "वल संवरणे" वलते बलाका पक्षिणि ॥ "पिषॢ संचूर्णने" पिनष्टीति पिनाकं हरधनुः ॥ "पतॢ गतौ" पततीति पताका ध्वजः ॥ "श्यैङ् गतौ" श्यायते श्यामाकः धान्यं व्रीहिविशेषः ॥ "षल शल" शलतीति शलाका अञ्जनलेखनिका नेत्राञ्जनीति ॥

॥ १६८ ॥ अर्तेरत्निः ॥ ३. ४१ ॥

अस्मादत्निप्रत्ययो भवति । "ऋ गतौ" इयर्तीति [अरत्निः][1] कनिष्ठिकाङ्गुलिः ॥

॥ १६९ ॥ अञ्जेरलिः ॥ ३. ४२ ॥

अस्मादलिप्रत्ययो भवति । "अञ्जु" व्यक्त्यादौ । अनक्तीति अञ्जलिः करसङ्घट्टः ॥

॥ १७० ॥ मृकणिभ्यामीचिः ॥ ३. ४३ ॥

आभ्यामीचिप्रत्ययो भवति । "मृङ् प्राणत्यागे" म्रियते तमोऽनेन मरीचिः किरणः ॥ "कण गतौ" कणते कणीचिः कलाविशेषः ॥

॥ १७१ ॥ रातेस्त्रिः ॥ ३. ४४ ॥

अस्मात्त्रिप्रत्ययो भवति । "रा ला दाने" रात्रिचराणां प्रतीतिं ददातीति रात्रिः क्षपा ॥

---

1. The word within brackets is omitted in the Ms.

## ॥ १७२ ॥ दुषेरिकः ॥ ३. ४५ ॥

अस्मादिकप्रत्ययो भवति । "दुष वैकृत्ये" हेताविन् । दूषयतीति **दूषिका** नेत्रमलम् । "दुषे कालिते" इत्युपधाया ऊत्वम् ॥

## ॥ १७३ ॥ कृतॄभ्यामीषः ॥ ३. ४६ ॥

आभ्यामीषप्रत्ययो भवति । "डु कृञ् करणे" गृहशोभां करोतीति **करीषः** शुष्कगोमयम् ॥ "तॄ प्लवनतरणयोः" तरतीति **तरीषः** शोभनम् ॥

## ॥ १७४ ॥ शिरीषादयः ॥ ३. ४७ ॥

शिरीषपुरीषर्जीषाम्बरीषाः । एते ईषप्रत्ययान्ता निपात्यन्ते । "शॄ हिंसायाम्" शृणातीति **शिरीषः** वृक्षः ॥ "पॄ पालनपूरणयोः" पालयति प्राणान् सम्यक् परिणामनिष्कासेन **पुरीषं** विष्ठा ॥ "ऋजि भृजी भर्जने" ऋज्यते **ऋजीषं** पशुवचनम्, वृथापाको वा ॥ "वृञ् वरणे" । अंपूर्वः । अं आकाशं वृणोतीति **अम्बरीषः** भ्राष्ट्रः । एवमन्येऽप्यनुसर्तव्याः ॥

## ॥ १७५ ॥ कृशॄशौण्डृभ्य ईरः ॥ ३. ४८ ॥

एभ्य ईरप्रत्ययो भवति । "कॄ विक्षेपणे" किरतीति **करीरः** वृक्षः ॥ "शॄ हिंसायाम्" शीर्यते **शरीरं** कायः ॥ "शौण्डृ गर्वे" शौण्डतीति **शौण्डीरः** सत्यवान् दाता ॥

## ॥ १७६ ॥ क्षीरोशीरगभीरगम्भीराः ॥ ३. ४९ ॥

एते ईरप्रत्ययान्ता निपात्यन्ते । "क्षणु हिंसायाम्" क्षणोतीति **क्षीरं** पयः ॥ "वश कान्तौ" वष्टीति **उशीरम्** । संप्रसारणं निपातनात् । अथवा उश्यते काम्यते उशीरं गन्धद्रव्यम् ॥ "गमॢ गतौ" गच्छतीति **गभीरः** अगाधः ॥ **गम्भीरः** स एव ॥

## ॥ १७७ ॥ अगिश्रुश्रियुवहिभ्यो निः ॥ ३. ५० ॥

एभ्यो धातुभ्यो निःप्रत्ययो भवति । "अक अग कुटिलायां गतौ" अगति वायुवशादूर्ध्वं गच्छतीति **अग्निः** अनलः ॥ "श्रु श्रवणे" श्रूयते

श्रोणिः कटिप्रदेशः ॥ "श्रीञ् सेवायाम्" श्रयतीति श्रेणिः पङ्क्तिः ॥ "यु मिश्रणे" यौतीति योनिः गुणोत्पत्तिस्थानम् ॥ "वह प्रापणे" उह्यते इति वह्निः दहनः ॥

॥ १७८ ॥ सृणिवेणिवृष्णिधृष्णिपार्ष्णिचूर्णयः ॥ ३. ५१ ॥

एते निप्रत्ययान्ता निपात्यन्ते । "सृ गतौ" सरतीति सृणिः अङ्कुशः ॥ "वि प्रजने" वेतीति वेणिः केशबन्धः ॥ "वृष सेचने" वर्षतीति वृष्णिः यादवविशेषः ॥ "ञि धृषा प्रागल्भ्ये" धृष्णोतीति धृष्णिः वशविशेषः [?] ॥ पृषु सेचने" पृष्यत इति पार्ष्णिः पादग्रन्थिः पादपश्चादवस्थानम् ॥ "चर" गत्यर्थः । चरतीति चूर्णिः ग्रन्थविशेषः ॥

॥ १७९ ॥ पातेर्डतिः ॥ ३. ५२ ॥

अस्माड्डतिः प्रत्ययो भवति । "पा रक्षणे" पातीति पतिः स्वामी ॥

॥ १८० ॥ भूस्वदिभ्यः क्रिः ॥ ३. ५३ ॥

एभ्यः क्रिप्रत्ययो भवति । को यण्वद्भावार्थः । "भू सत्तायाम्" भवतीति भूरिः प्रभूतम् ॥ "षूङ् प्राणिगर्भविमोचने" सूते बुद्धिं सूरिः पण्डितः ॥ "अद प्सा भक्षणे" स्वमत्तीति अद्रिः पर्वतः ॥

॥ १८१ ॥ पृणातेः कुषः ॥ ३. ५४ ॥

अस्मात् कुषप्रत्ययो भवति । कोऽनुबन्धः । "पॄ पालनपूरणयोः" पृणाति पूरयति स्त्रीणामुदरं गर्भेणेति पुरुषः पुमान् ॥

॥ १८२ ॥ हतेरूषः ॥ ३. ५५ ॥

हन्तेर्धातोः ऊषप्रत्ययो भवति । "हन हिंसागत्योः" हन्तीति हनूषः राक्षसविशेषः ॥

॥ १८३ ॥ मञ्जूषादयः ॥ ३. ५६ ॥

मञ्जूषगण्डूषपीयूषाटरूषाः । एते ऊषप्रत्ययान्ता निपात्यन्ते । "मचि धारणोच्छ्रायपूजनेषु" मञ्चते मञ्जूषा पेटा ॥ "गडि वदनै-

कदेशे" गण्डतीति गण्डूषं कर[मुख]वारि ॥ "पीङ् पाने" पीयते इति पीयूषम् अमृतम् ॥ "ऋ गतौ" आटपूर्वः । आटं इयर्तीति आटरूषः वासा ॥

## ॥ १८४ ॥ शकादिभ्योऽटः ॥ ३. ५७ ॥

एवमादिभ्योऽटः प्रत्ययो भवति । "शक्लृ शक्तौ" शक्नोति गन्तुमनेन शकटः स्यन्दनः ॥ "अव रक्ष पालने" अवतीति अवटः गर्तः ॥ "सृ गतौ" सरतीति सरटः कृकलासः ॥ "डु कृञ् करणे" करोति मदं करटः गजकपोलः । एवमन्येऽप्यनुसर्तव्याः ॥

## ॥ १८५ ॥ जटामर्कटौ ॥ ३. ५८ ॥

एतावटप्रत्ययान्तौ निपात्येते । "जनी प्रादुर्भावे" केशेषु जायन्ते जटा केशसमूहः ॥ "मृङ् प्राणत्यागे" म्रियते मर्कटः कपिः । अथ वा "मर्क" इति सौत्रोऽयं धातुः । मर्कतीति मर्कटः ॥

## ॥ १८६ ॥ वहलादिभ्य इत्रोत्रौ ॥ ३. ५९ ॥

एवमादिभ्यो यथासङ्ख्यं इत्र उत्र इत्येतौ प्रत्ययौ भवतः । "वह प्रापणे" वहतीति वहित्रं पोतः ॥ "रा ला दाने" लातीति लोत्रम् अपहृतं द्रव्यम् । एवमादयोऽप्यनुसर्तव्याः ॥

## ॥ १८७ ॥ खर्जिकृपिमसिपिञ्जादिभ्य ऊरोलौ ॥ ३. ६० ॥

एवमादिभ्य ऊर ऊल इत्येतौ प्रत्ययौ भवतः । "खर्ज मार्जने" खर्जतीति खर्जूरः वृक्षविशेषः ॥ "कृपू सामर्थ्ये" कल्पते कर्पूरः गन्धद्रव्यम् ॥ "मसि परिमाणे" मस्यतीति मसूरः धान्यविशेषः ॥ "पिञ्ज" इति सौत्रोऽयं धातुः । पिञ्जतीति पिञ्जूरः अक्षिरोगः ॥ "लगि" गत्यर्थः । लङ्गयतीति लाङ्गूलं पुच्छम् । उणादित्वाल्लङ्गेर्दीर्घत्वम् । इत्यादयोऽनुसर्तव्याः ॥

## ॥ १८८ ॥ सर्तेर्वः ॥ ३. ६१ ॥

अस्माद्वप्रत्ययो भवति । "सृ गतौ" सरतीति सर्वं कृत्स्नम् ॥

## ॥ १८९ ॥ उल्वादयः ॥ ३. ६२ ॥

उल्वनिम्वबिम्बशुल्वाः । एते बप्रत्ययान्ता निपात्यन्ते । "ऋ गतौ" इयर्तीति उल्वं जरायुः ॥ "णीङ् प्रापणे" नयते निम्बः वृक्षः ॥ "वि प्रजने" वेतीति बिम्बं प्रतिरूपम् ॥ "शल गतौ" शलतीति शुल्वं ताम्रम् । एवमन्येऽप्यनुसर्तव्याः ॥

## ॥ १९० ॥ शविकमिभ्यां दः ॥ ३. ६३ ॥

आभ्यां दप्रत्ययो भवति । "शव गतौ" शवतीति शब्दः ध्वनिः ॥ "कमु कान्तौ" कमतीति कन्दः सूरणः ॥

## ॥ १९१ ॥ कुन्दादयः ॥ ३. ६४ ॥

कुन्दवृन्दमन्दाब्दाः । एते दप्रत्ययान्ता निपात्यन्ते ।·········तीति कुन्दः पुष्पविशेषः ॥ "वृञ् वरणे" वृणोतीति वृन्दः समूहः ॥ "मन ज्ञाने" मन्यते मन्दः स्थिरगतिः ॥ "अव रक्ष पालने" अवतीति अब्दः संवत्सरः ॥

## ॥ १९२ ॥ पीम्यो रुः ॥ ३. ६५ ॥

अनयो रुप्रत्ययो भवति । "पीङ् पाने" पीयते पेरुः भास्करः ॥ "मीङ् हिंसायाम्" मीयते मेरुः सुरशैलः । सुपूर्वः । सुमेरुः स एव ॥

## ॥ १९३ ॥ जत्र्वादयः ॥ ३. ६६ ॥

जत्रुश्मश्रुशिग्रुशत्रवः । एते रुप्रत्ययान्ता निपात्यन्ते । "जनीङ् प्रादुर्भावे" जायते जत्रु ग्रीवाया अस्थि ग्रीवावयवो वा ॥ "शो तनूकरणे" श्यति श्मश्रु मुखशोभा ॥ "शीङ् निशामने" शिनोतीति शिग्रुः शोभाञ्जनः ॥ "शद्लृ शातने" शीयत इति शत्रुः वैरी । एवमन्येऽपि ॥

## ॥ १९४ ॥ योरागूः ॥ ३. ६७ ॥

अस्मादागूप्रत्ययो भवति । "यु मिश्रणे" यौतीति यवागूः अश्वपद्यं वरणं च ॥

इति दौर्गसिंह्यां उणादिवृत्तौ

तृतीयः पादः ॥

## ॥ अथ चतुर्थः पादः ॥

### ॥ १९५ ॥ जनिमनिदसिभ्यो युः ॥ ४. १ ॥

एभ्यः युप्रत्ययो भवति । उणादित्वात् योरनादेशो न भवति । "जनी प्रादुर्भावे" जायते **जन्युः** प्राणी ॥ "मन ज्ञाने" मन्यते **मन्युः** कोपः ॥ "तसु दसु उपक्षये" दस्यति अन्यमुपक्षणोतीति **दस्युः** चोरः ॥

### ॥ १९६ ॥ ह्रीकृशिभ्यां कुगानुकौ ॥ ४. २ ॥

आभ्यां कुक् आनुक् इत्येतौ प्रत्ययौ भवतः यथासङ्ख्यम् । ककारो यण्वद्भावार्थः, तेनागुणत्वम् । "ह्री लज्जायाम्" जिह्रेतीति **ह्रीकुः** सलज्जः ॥ "कृश तनूकरणे" कृशतीति **कृशानुः** वह्निः ॥

### ॥ १९७ ॥ मन्यतेः किरत उच्च ॥ ४. ३ ॥

अस्मात् किः प्रत्ययो भवति, अत उत्वम् । "मन ज्ञाने" मन्यते **मुनिः** यतिः ॥

### ॥ १९८ ॥ अहिकम्प्योर्नलोपश्च ॥ ४. ४ ॥

आभ्यां किः प्रत्ययो भवति, नलोपश्च । "अहि प्लिहि गतौ" अंहते वेगेन गच्छतीति **अहिः** सर्पः ॥ "कपि चलने" कम्पते **कपिः** वानरः ॥

### ॥ १९९ ॥ शृवसिवपिराजिवृहनिनभिभ्य[1] इञ् ॥ ४. ५ ॥

एभ्य इञ्प्रत्ययो भवति । ञकार इञ्वद्भावार्थः । "शृ हिंसायाम्" शृणोतीति **शारिः** गजप्रावरणम् ॥ "वस निवासे" वसतीति **वासिः** काष्ठकुद्दालः ॥ "टु वपु" उप्यते **वापी** जलाधारः ॥ "राजृ दीप्तौ" राजते इति **राजिः** श्रेणिः ॥ "वृञ् वरणे" वृणोतीति **वारि** जलम् ॥ "हन हिंसागत्योः" हन्तीति **घातिः** प्रहरणम् ॥ "णभ तुभ हिंसयाम्" नभ्यतीति **नाभिः** शरीरमध्यम् ॥

1. The ms. reads नभेरिञ्.

॥ २०० ॥ अजिजन्यतिरशिपणिभ्यः[1] ॥ ४. ६ ॥

एभ्य इञ्प्रत्ययो भवति । पृथग्योगः स्पष्टार्थः । अत एव निर्देशादजेर्वी न स्यात् । "अज क्षेपणे" अज्यते लोकोऽस्मिन्निति आजिः ॥ "जन जनने" जजन्तीति जनिः माता ॥ "अत सातत्यगमने" अततीति आतिः गमनम् ॥ "रश" इति सौत्रोऽयं धातुः । रशतीति राशिः ॥ "पण व्यवहारे स्तुतौ च" पणायते व्यवहरत्यनेन पाणिः करः ॥

॥ २०१ ॥ वे[ञो डिः][2] ॥ ४. ७ ॥

अस्मात् डिप्रत्ययो भवति । डोऽन्त्यस्वरादिलोपार्थः । "वेञ् तन्तुसन्ताने" वयतीति विः पक्षी ॥

॥ २०२ ॥ नीविः ॥ ४. ८ ॥

अयं डिप्रत्ययान्तो निपात्यते । निपूर्वः । "वेञ् तन्तुसन्ताने" वयतीति नीविः मूलबन्धनम् [मूलधनम्] ॥

॥ २०३ ॥ सख्यादयः ॥ ४. ९ ॥

सखि अग्नि प्रहि इत्यादयो डिप्रत्ययान्ता निपात्यन्ते । "ख्या प्रकथने" समानपूर्वः । समा[नं[2]] ख्यातीति सखि मित्रम् ॥ "श्रा पाके" नञ्पूर्वः । न श्रातीति अश्रिः अग्रभागः ॥ "ओ हाक् त्यागे" । प्रपूर्वः । प्रजहातीति प्रहिः कूपः त्यागकर्ता वा । इत्यादयोऽप्यनुसर्तव्याः ॥

॥ २०४ ॥ धृञ्वसिभ्यां क्तिः ॥ ४. १० ॥

आभ्यां क्तिप्रत्ययो भवति । ककारो यण्वद्भावार्थः । तेनागुणत्वम् । "हृञ् आदरे" ह्रियते हृतिः चर्मप्रसेवकः ॥ "वस आच्छादने" वस्यतेऽनया वस्तिः पूर्वशिरा ॥

॥ २०५ ॥ वहिवस्यमिभ्योऽतिः ॥ ४. ११ ॥

एभ्योऽतिप्रत्ययो भवति । "वह प्रापणे" वहतीति वहतिः नौः ॥

---

१. The ms. reads पणेः.

२. The letters within brackets are omitted in the ms.

"वस निवासे" वसति लोकोऽस्यामिति वसतिः गृहम् ॥ "अम गतौ" अमतीति अमतिः कालः ॥

॥ २०६ ॥ क्षिपिध्रुविलिखिलङ्घिदमिभ्यो ऋक् ॥ ४. १२ ॥

एभ्यो ऋक्प्रत्ययो भवति । "क्षिप प्रेरणे" क्षिपतीति क्षिपकः योद्धा ॥ "ध्रुव गतिस्थैर्ययोः" ध्रुवति निश्चलीभवत्यनेन ध्रुवकः शङ्कुः ॥ "लिख लेखने" लिखतीति लेखकः चित्रकरः ॥ इदनुबन्धत्वान्नागमः । "लघि" गत्यर्थः । लङ्घत इति लङ्घकः अशमी कामीत्यर्थः ॥ "दम" इति सौत्रः । दमतीति दमकः कर्मकारी ॥

॥ २०७ ॥ हो द्वे च ॥ ४. १३ ॥

अस्मात् ऋक्प्रत्ययो भवति । अस्य च द्वे रूपे भवतः । "ओ हाक् त्यागे" जहाति जहकः कमलः ॥

॥ २०८ ॥ कृषेर्वृद्धिर्वा ॥ ४. १४ ॥

अस्मात् ऋक्प्रत्ययो भवति वृद्धिर्वा । "कृष विलेखने" कर्षतीति कर्षकः कार्षकः कृषीवलः । "युवृझामनाकान्ताः" इति ऋक्स्थाने अकादेशो भवति ॥

॥ २०९ ॥ कृञादिभ्यो ऋः ॥ ४. १५ ॥

"डु कृञ् करणे" "सृ गतौ" "मृङ् प्राणत्यागे" "फल निष्पत्तौ" एवमादिभ्यो ऋप्रत्ययो भवति । करोति भयं करकं घनोपलः ॥ सरत्यनेन सरकः सुरापानपात्रम् ॥ म्रियतेऽनेन मरकः जनोपसर्गः ॥ फलतीति फलकः अक्षक्रीडादिः । एवमन्येऽपि ॥

॥ २१० ॥ शमेः खः ॥ ४. १६ ॥

अस्मात् खप्रत्ययो भवति । "शमु दमु उपशमने" जलं विना शाम्यतीति शङ्खः कम्बुः ॥

॥ २११ ॥ मुहेर्मूर्च ॥ ४. १७ ॥

अस्मात् खप्रत्ययो भवति, मूरादेशश्च । "मुह वैचित्ये" मुह्यति कार्येषु मूर्खः जडः ॥

॥ २१२ ॥ शिखा ॥ ४. १८ ॥

अयं शब्दः खप्रत्ययान्तो निपात्यते । "शीङ् निशामने" शिनोति जनः शिखा चूडा ॥

॥ २१३ ॥ गमेर्गः ॥ ४. १९ ॥

अस्मात् गप्रत्ययो भवति । "गमॢ गतौ" गम्यते पुण्यार्थिभिः गङ्गा जाह्नवी ॥

॥ २१४ ॥ जनेर्घः ॥ ४. २० ॥

अस्मात् घप्रत्ययो भवति । "जनीङ् प्रादुर्भावे" जायतेऽनया वेगो जङ्घा प्राण्यङ्गविशेषः ॥

॥ २१५ ॥ कचेः छः ॥ ४. २१ ॥

अस्मात् छप्रत्ययो भवति । "कच बन्धने" कचते बध्नाति जलम्, जलेन कच्यते वा कच्छः नदीपार्श्वः ॥

॥ २१६ ॥ कृतृकृपिभ्यः कीटः ॥ ४. २२ ॥

एभ्यः कीटप्रत्ययो भवति । "कॄ विक्षेपे" शिरसि कीर्यते क्षिप्यते किरीटः मकुटः ॥ "तॄ प्लवनतरणयोः" तरतीति तिरीटं वेष्टनम् ॥ "कृपू सामर्थ्ये" कल्पत इति कृपीटः कर्पूरकुटी जलं वा ॥

॥ २१७ ॥ शमेर्डः ॥ ४. २३ ॥

अस्मात् डः प्रत्ययो भवति । "शमु दमु उपशमे" शाम्यतीति शण्डः महिषः चोरो वा ॥

॥ २१८ ॥ सूचेः स्मः ॥ ४. २४ ॥

अस्मात् स्मः प्रत्ययो भवति । "सूच पैशुन्ये" सूचयतीति सूक्ष्मं परमाणुमात्रम् ॥

॥ २१९ ॥ अदि भुवो डुतः ॥ ४. २५ ॥

अद्युपपदे अस्मात् डुतप्रत्ययो भवति । "भू सत्तायाम्" । अदपूर्वः अद्विस्मितं भवत्यत्र अद्भुतम् आश्चर्यम् ॥

## ॥ २२० ॥ रुहिहृश्याम्य इतः ॥ ४. २६ ॥

एभ्य इतः प्रत्ययो भवति । "रुह बीजजन्मनि प्रादुर्भावे" रोहतीति **रोहित्** मत्स्यविशेषः । कपिरिकादित्वात् लोहितं रक्तम् ॥ "हृञ् हरणे" हरति शोभानीति **हरितः** वर्णविशेषः ॥ "श्यैङ् गतौ" श्यायते **श्येतः** कुमुदवर्णाभः ॥

## ॥ २२१ ॥ मृगृवाहस्यमिदमिलूपूभ्यस्तः ॥ ४. २७ ॥

एभ्यस्तप्रत्ययो भवति । "मृङ् प्राणत्यागे" म्रियते **मर्तः** भूलोकः ॥ "गृ निगरणे" गिरतीति **गर्तः** बिलम् ॥ "वा गतिगन्धनयोः" वातीति **वातः** वायुः ॥ "हसे हसने" हसतीति **हस्तः** करः ॥ "अम गतौ" अमतीति **अन्तः** अवसानम् ॥ "शमु दमु" दम्यते भक्ष्यतेऽनेन **दन्तः** दशनः ॥ "लूञ् छेदने" लूयते **लोतः** नेत्रवारि ॥ "पूञ् पवने" अर्थदानेन आत्मस्थं जनं पुनातीति **पोतः** प्रवहणम् ॥

## ॥ २२२ ॥ सर्वधातुभ्यो मन् ॥ ४. २८ ॥

सर्वेभ्यो धातुभ्यो मन्प्रत्ययो भवति । "भस भर्त्सनदीप्त्योः" भसितं तदिति **भस्म** रक्षा ॥ "वृतु वर्तने" वृत्तं तदिति **वर्त्म** मार्गः ॥ "उणादयो भूतेऽपि" इति वचनादतीते अत्र मन् ॥

## ॥ २२३ ॥ मायाछायासस्यादयः ॥ ४. २९ ॥

मायादयो यप्रत्ययान्ता निपात्यन्ते । "माङ् माने" मातीति **माया** प्रपञ्चः परवञ्चनं वा ॥ "छो छेदने" छ्यति आतपमिति **छाया** प्रतिबिम्बम् ॥ "शसु हिंसायाम्" शसति हिनस्ति क्षुधामिति **सस्यं** धान्यम् । निपातनात् शस्य सत्वम् ॥

## ॥ २२४ ॥ सन्ध्यादयः ॥ ॥ ४. ३० ॥

' सन्ध्या वन्ध्या जाया इत्यादयः शब्दाः यप्रत्ययान्ता निपात्यन्ते । संपूर्वो धाञ् । संदधातीति **सन्ध्या** दिवावसानम् । संपूर्वः "ध्यै चिन्तायाम्" वा । विप्राः सम्यक् ध्यायन्ति अस्यां वा **सन्ध्या** रात्रिदिनावसानम् ॥

" वन्ध बन्धने " बध्यते इति वन्ध्या निष्फला ॥ " ज्या वयोहानौ " जिनातीति जाया । " जनी प्रादुर्भावे " सुखाय जायते आत्मा अत्र जाया पत्नी ॥

॥ २२५ ॥ रुचिभुजिभ्यां किष्यः ॥ ४. ३१ ॥

आभ्यां किष्यप्रत्ययो भवति । ककारो यण्वद्भावार्थः । तेनागुणत्वम् । " रुच दीप्तौ " रोचते इति रुचिष्यः प्रियः ॥ " भुज पालने " स्वाम्युच्छिष्टं भुङ्क्ते भुजिष्यः दासः ॥

॥ २२६ ॥ मदेः स्यः ॥ ४. ३२ ॥

अस्मात् स्यप्रत्ययो भवति । " मदि हर्षे " माद्यति हृष्यति नवोदकेन मत्स्यः मीनः ॥

॥ २२७ ॥ मद्यसिवसि[वासि]भ्यः सरः ॥ ४. ३३ ॥

एभ्यः सरप्रत्ययो भवति । " मदि हर्षे " माद्यतीति मत्सरः पैशुन्यम् ॥ " अश भोजने " अश्नातीति अक्षरं वर्णः ॥ " वस आच्छादने " वसन्ति ऋतवोऽत्र वत्सरः वर्षः । संपूर्वः संवत्सरः स एव ॥ " वास उपसेवायाम् " चौरादित्वादिन् । वासयतीति वासरः दिवसः ॥

॥ २२८ ॥ शृणातेः करः ॥ ४. ३४. ॥

अस्मात् करप्रत्ययो भवति । " शॄ हिंसायाम् " शृणाति पित्तमिति शर्करा मत्स्यण्डी गुडविकारः ॥

॥ २२९ ॥ पुषो यण्वत् ॥ ४. ३५ ॥

अस्मात् करप्रत्ययो भवति । स च यण्वत् । [" पुष पुष्टौ "] पुष्यति शोभामिति पुष्करं पद्मम् । लत्वम् । पुष्कलं भूरि ॥

॥ २३० ॥ स्तृणातेष्टत् ॥ ४. ३६ ॥

अस्मात् टत्प्रत्ययो भवति । अकारमात्रः । " रमृवर्णः " । अथवा डट् ।

1. The words within brackets are not found in the ms.

" डानुबन्धेऽन्त्यस्वरादेर्लोपः " । डकारो नदाद्यर्थः । रकारमात्र एव । " स्तृञ् आच्छादने " स्तृणाति आच्छादयति लज्जया आत्मानं इति स्त्री महिला ॥

## ॥ २३१ ॥ कठिचकिभ्यामोरः ॥ ४. ३७ ॥

आभ्यामोरप्रत्ययो भवति । " कठ कृच्छ्रजीवने " कठति कृच्छ्रेण [जीवेति] कठोरः कर्कशः ॥ " चक तृप्तौ " चकतीति चकोरः पक्षिविशेषः ॥

## ॥ २३२ ॥ घुणेर्डोरः ॥ ४. ३८ ॥

अस्मात् डोरप्रत्ययो भवति । " डानुब[न्धेऽन्त्यस्वरादे]र्लोपः "[1] । " घुण घूर्ण भ्रमणे " घोणते घोरं रौद्रम् ॥

## ॥ २३३ ॥ सर्वधातुभ्यः ष्ट्रन् ॥ ४. ३९ ॥

सर्वेभ्यो धातुभ्यो यथासंभवं ष्ट्रन्प्रत्ययो भवति । षकारो नदाद्यर्थः । निमित्ताभावादृकारः । नकार उच्चारणार्थः । " भस भर्त्सनदीप्त्योः " बभस्तीति भस्त्री कांसादिधमनिः चर्ममयी । अस्य नदादित्वमाकृतिगणत्वात् ॥ " धेट् पा पाने " पीयतेऽत्र पात्रं पात्री वा ॥ " मा माने " मातीति मात्रा उपकरणं स्तोकं वा ॥ " अम रोगे " अमतीति अमत्रम् अन्तर्नाडी गुणश्च ॥ " वि प्रजनादिषु " वेतीति वेत्रं विटपविशेषः ॥ " वश कान्तौ " वष्टीति उष्ट्रः करभः । अस्य ष्ट्रन्नन्तस्य संप्रसारणं निपातनात् षत्वं च ॥

## ॥ २३४ ॥ चिमिदिभ्यां त्रक् ॥ ४. ४० ॥

आभ्यां त्रक्प्रत्ययो भवति । ककारो यण्वद्भावार्थः । तेनागुणत्वम् । " चिञ् चयने " चिनोतीति चित्रं लेख्यम् आश्चर्यं वा ॥ " ञि मिदा स्नेहने " मिनोति स्नेहयुक्तो भवति इति मित्रम् । " अघोषेष्वशिटां प्रथमः " । सुहृत् ॥

## ॥ २३५ ॥ पूञो ह्रस्वश्च ॥ ४. ४१ ॥

अस्मात् त्रक्प्रत्ययो भवति । धातोः ह्रस्वश्च । कोऽगुणार्थः । [" पूञ पवने "] पुनातीति पुत्रः ॥

---

1. The words within brackets are omitted in the Ms.

॥ २३६ ॥ सिर्मनन्तश्च ॥ ४. ४२ ॥

"पूञ् पवने" अस्मात् सिप्रत्ययो भवति। अस्य च मन् अन्तश्च। चकारात् ह्रस्वत्वं च। इकार उच्चारणार्थः। पुनातीति पुमान् पुरुषः ॥

॥ २३७ ॥ कुटेर्मलः ॥ ४. ४३ ॥

अस्मान्मलप्रत्ययो भवति। कुटादित्वात् अगुणत्वम्। "कुट कौटिल्ये" कुटति पानीयं कुटिलं भवति इति कुड्मलम्। निपातनात् टस्य डत्वम्। ईषद्विकसितम् ॥

॥ २३८ ॥ व्रश्चेः सक् ॥ ४. ४४ ॥

अस्मात् सक्प्रत्ययो भवति। ककारो यण्वद्भावार्थः। तेन "ग्रहिज्या" इत्यादिना संप्रसारणम्। "व्रश्चू छेदने" व्रश्चत्यातपं वृक्षः पादपः ॥

॥ २३९ ॥ स्रुवः चिक् ॥ ४. ४५ ॥

अस्मात् चिक्प्रत्ययो भवति। इकारोऽनुबन्धः। कोऽगुणार्थः। "स्रु गतौ" स्रवतीति स्रुक् यज्ञोपकरणम् ॥

॥ २४० ॥ चतेर्वारः ॥ ४. ४६ ॥

अस्माद्वारप्रत्ययो भवति। अकार उच्चारणार्थः। "चते चदी याचने" चतन्ति चतेते चत्वारः चतुस्सङ्ख्या ॥

॥ २४१ ॥ गमेरिनिः ॥ ४. ४७ ॥

अस्मादिनिप्रत्ययो भवति। "गमॢ गतौ" गमिष्यतीति गमी गन्ता ॥

॥ २४२ ॥ आङि णिनिः ॥ ४—४८ ॥

आङि उपपदे गमेरेव णिनिः प्रत्ययो भवति। णकार इज्वद्भावार्थः। इकार उच्चारणार्थः। "गमॢ गतौ" आङ्पूर्वः। आगमिष्यतीति आगामी आगन्तुः ॥

## ॥ २४३ ॥ भूस्थाभ्यां णिनिः ॥ ४—४९ ॥

आभ्यां णिनिप्रत्ययो भवति। णकार इज्वद्भावार्थः। भाव् इश्च। "भू सत्तायाम्" भविष्यतीति भावी भविष्यन्॥ "ष्ठा गतिनिवृत्तौ" स्थास्यतीति स्थायी स्थास्यन्॥

## ॥ २४४ ॥ परमेष्ठी ॥ ४—५० ॥

अयं णिनिप्रत्ययान्तो निपात्यते। "ष्ठा गतिनिवृत्तौ" परमपूर्वः। सप्तम्या अलुक्। परमे पदे तिष्ठतीति परमेष्ठी ब्रह्मा॥

## ॥ २४५ ॥ भृवमिकुभ्यः शक् ॥ ४—५१ ॥

एभ्यः शक्प्रत्ययो भवति। ककारः पूर्ववत्। "डु भृञ्" बिभर्तीति भृशम् अत्यर्थम्॥ "टु वमु उद्गिरणे" वमति शब्दमिति वंशः वेणुः॥ "कु शब्दे" कौति पवित्रतामिति कुशः दर्भः॥

## ॥ २४६ ॥ कीनाशाङ्कुशौ ॥ ४—५२ ॥

एतौ शक्प्रत्ययान्तौ निपात्येते। "कित ज्ञाने" चेकेतीति कीनाशः यमः॥ "अकि लक्षणे" इदनुबन्धत्वान्नागमः। अनुस्वारो वर्गान्तः। अङ्कतीति अङ्कुशः करिवारणम्॥

## ॥ २४७ ॥ वृतृवदिहनिमनिकस्यशिकषेभ्यः सः ॥ ४—५३ ॥

एभ्यः सप्रत्ययो भवति। "वृञ् वरणे" वृणोति सर्वं छादयतीति वर्षं मधुपानम्॥ [तर्षः सूर्यः॥][1] "वद व्यक्तायां वाचि" मातरमभ्येत्य वदतीति वत्सः शकृत्करिः॥ "हन हिंसागत्योः" बिसं हन्तीति हंसः। अथवा चारुगत्या हन्ति गच्छति इति हंसः पक्षी॥ उणादित्वात् क्वचित् दीर्घत्वमपि दृश्यते। "मन ज्ञाने" मन्यते संभाव्यते शरीरोपचयमनेन इति मांसं पिशितम्॥ "कसि गतौ" इदनुबन्धत्वान्नागमः। कंसतीति कांसः धातुविशेषः॥ "अशू व्याप्तौ" अश्नोतीति अक्षः शकटैकदेशः॥ "कष निष्कर्षे" कषतीति कक्षा प्रसिद्धा॥

---

1. The words within brackets are omitted in the ms.

## ॥ २४८ ॥ कृञः पासः ॥ ४—५४ ॥

"डु कृञ् करणे" अस्मात् पासप्रत्ययो भवति। करोति शोभां कर्पासः बादरः ॥

## ॥ २४९ ॥ वसेः कनसिः ॥ ४—५५ ॥

अस्मात् कनसिप्रत्ययो भवति। इकार उच्चारणार्थः। ककारो यण्वत्; तेनागुणत्वम्, संप्रसारणं च। "उशनस्" इत्यादिना अन्। "वश कान्तौ" वष्टि वाञ्छति दानवोदयमिति उशना शुक्रः ॥

## ॥ २५० ॥ सर्वधातुभ्योऽसुन्[1] ॥ ४—५६ ॥

सर्वधातुभ्यो यथाभिधानं असुन्प्रत्ययो भवति। नकारोकारौ उच्चारणार्थौ। "विध विधाने" विधति सृजति इति वेधाः स्रष्टा ॥ "इण् गतौ" एति सर्वं विकारम् अयः लोहम् ॥ "पीङ् पाने" पीयते पयः पानीयम् ॥ "तप धूप सन्तापे" तपतीति तपः घर्मार्जिनम् ॥ "मन ज्ञाने" मन्यते बुध्यते अनेनेति मनः अन्तःकरणम् ॥ "चिती संज्ञाने" चेतति जन आत्मानमिति चेतः चित्तम् ॥ "रह त्यागे" रहति त्यजति संसर्गमिति रहः एकान्तम् ॥ "वि प्रजने" वेति इति वयः शरीरावस्था ॥ यथासंभवं गुणः। "अन्त्वसन्तस्य" इति दीर्घत्वम्। "डु धाञ्" पुरो धीयते पुरोधाः पुरोहितः ॥

## ॥ २५१ ॥ चन्द्रे मातेः ॥ ४—५७ ॥

चन्द्रे उपपदे अस्मादसुन्प्रत्ययो भवति। अगुणवद्भावादाकारलोपः। भिन्नयोगः स्पष्टार्थ एव। चन्द्रं मातीति चन्द्रमाः चन्द्रः।

## ॥ २५२ ॥ अनेहसोऽप्सरसोऽङ्गिरसः ॥ ४—५८ ॥

एतेऽसुन्प्रत्ययान्ता निपात्यन्ते। "ईह चेष्टायाम्" नञ्पूर्वः। न ईहते चेष्टते अनेहा कालः ॥ "सृ गतौ" अप्पूर्वः। अप्सरन्तीति अप्सरसः देवयोषितः ॥ "गॄ निगरणे" गिरन्तीति अङ्गिराः। निपातनादंपूर्वः। अनुस्वारो वर्गान्तः, इरादेशश्च। मुनिविशेषः ॥

---

1. This suffix is written consistently as असन्,

## ॥ २५३ ॥ उषिरञ्जिशॄभ्यो यण्वत् ॥ ४—५९ ॥

एभ्योऽसुन्प्रत्ययो भवति, स च यण्वत् । तेनागुणत्वम् । अनुषङ्गलोपः । "ॠदन्तस्येरगुणे" । "उष दाहे" तनु उषति दहति इति उषाः अहर्मुखम् ॥ "रञ्ज रागे" रक्षत्यनेनेति रजः धूलिः ॥ "शॄ सॄ हिंसायाम्" शीर्यते हिंस्यते शिरः मूर्धा ॥

## ॥ २५४ ॥ यजेः शिश्च ॥ ४—६० ॥

अस्मादसुन्प्रत्ययो भवति । स च यण्वत् । जस्य शिरादेशः । इकार उच्चारणार्थः । "यज देवपूजासङ्गतिकरणदानेषु" यज्यते यशः कीर्तिः ॥

## ॥ २५५ ॥ उषेर्जश्च ॥ ४. ६१ ॥

अस्मादसुन्प्रत्ययो भवति । अस्य जकारोऽन्तस्य । अकार उच्चारणार्थः । "उष दाहे" उषतीति ओजः बलम् ॥

## ॥ २५६ ॥ वाचः सोऽन्तश्च ॥ ४. ६२ ॥

अस्मादसुन्प्रत्ययो भवति, सोऽन्तश्च । अकार उच्चारणार्थः । चवर्गस्य किः । "नामि" इत्यादिना षत्वम् । "वच परिभाषणे" वक्ति वाणीमिति वक्षः भुजमध्यम् ॥

## ॥ २५७ ॥ स्रुरिभ्यां तोऽन्तश्च ॥ ४. ६३ ॥

आभ्यामसुन्प्रत्ययो भवति अनयोस्तोऽन्तश्च । "षु स्रु द्रु" स्रवति जलं स्रोतः प्रवाहः ॥ "रि रेषणे च" रीयते स्रवते योनौ रेतः शुक्रम् ॥

## ॥ २५८ ॥ शीङः फोऽन्तश्च ॥ ४. ६४ ॥

अस्मादसुन्प्रत्ययो भवति, फोऽन्तश्च । अकार उच्चारणार्थः । शीङ् स्वप्ने" शेते योनौ शेफः मेढ्रम् ॥

## ॥ २५९ ॥ छदेर्नश्च ॥ ४. ६५ ॥

अस्मादसुन्प्रत्ययो भवति, धातोश्छस्य नोऽन्तश्च । "छद षद्" चौरादित्वादिन् । अस्योपधाया दीर्घः । उणादित्वात् ह्रस्वत्वम् । छादयति पापं छन्दः वेदः ॥

॥ २६० ॥ अमेर्भोऽन्तश्च ॥ ४. ६६ ॥

अस्मादसुन्प्रत्ययो भवति, भोऽन्तश्च । अकार उच्चारणार्थः । "अम रोगे" अमति स्वादुत्वं गच्छति इति अम्भः पानीयम् ॥

॥ २६१ ॥ अर्तेरुश्च ॥ ४. ६७ ॥

अस्मादसुन्प्रत्ययो भवति । अस्य च उकारादेशो भवति । अर्यते गम्यते उरः वक्षः ॥

॥ २६२ ॥ कृतेः स्नक् ॥ ४. ६८ ॥

अस्मात् स्नक्प्रत्ययो भवति । ककारो यण्वद्भावार्थः । तेनागुणत्वम् । "कृती छेदने" कृन्तति वेष्टयति व्याप्नोति इति कृत्स्नं विश्वम् ॥

॥ २६३ ॥ श्लिषेरितोऽच्च ॥ ४. ६९ ॥

अस्मात् स्नक्प्रत्ययो भवति । अस्येकारस्याद्भवति । "श्लिष आलिङ्गने" श्लिष्यते श्लक्ष्णं सुन्दरम् । "षढोः कः से" निमित्ताण्णत्वं "रषृवर्णेभ्यो णम्" ॥

॥ २६४ ॥ तिजेर्दीर्घश्च ॥ ४. ७० ॥

अस्मात् स्नक्प्रत्ययो भवति । अस्य च इकारो दीर्घो भवति । "चजोः कगौ" चस्य गत्वम् । अघोषेषु कत्वम् षत्वं णत्वं च । "तिजि निशाने क्षमायां च" तितिक्षते सर्वं सहते तीक्ष्णं खरम् ॥

इति श्री दौर्गसिंह्यामुणादि-

वृत्तौ चतुर्थः पादः ॥

---

## ॥ अथ पञ्चमः पादः ॥

शब्दात्मिका या त्रिजगद्बिभर्ति स्फुरद्विचित्रार्थसुधां स्रवन्ती ।
या ऋद्धिरी··हृद्····मुखे च सा मे वशमस्तु नित्यम् ॥

उणादिविषये प्रसिद्धं पञ्चमं पादं प्रकाशयन्नाह—

### ॥ २६५ ॥ अभावीशेः कुः ॥ ५. १ ॥

अभावुपपदे ईशेः कुप्रत्ययो भवति । "ईशि ऐश्वर्ये" । अभिपूर्वः । अभीष्टे तमो नाशयति अभीषुः रश्मिः ॥

### ॥ २६६ ॥ वौ धाञश्च ॥ ५. २ ॥

वावुपपदे दधातेः कुः प्रत्ययो भवति । "डु धाञ्" विपूर्वः । विदधात्यमृतमिति विधुः चन्द्रः । कोऽनुबन्धो यण्वदर्थः । तेनानुषङ्गलोपः । असार्वधातुक इति ॥

### ॥ २६७ ॥ दंशेः कनिः ॥ ५. ३ ॥

दंशेः कनिप्रत्ययो भवति । कानुबन्धत्वादनुषङ्गलोपः । "दंश दशने" दंशतीति दश सङ्ख्या ॥

### ।। २६८ ॥ मङ्खेर्नेलुगवन्तश्च ॥ ५. ४ ॥

मङ्खेः कनिः प्रत्ययो भवति नलुगवन्तश्च । "मघिङ् कैतवे च" इदनुबन्धत्वान्नागमः । मङ्खत इति मघवा इन्द्रः ॥

### ॥ २६९ ॥ सहेः षष् कनेर्लुक् च ॥ ५. ५ ॥

सहेः कनिः प्रत्ययो भवति, सहेः षषादेशश्च । कनेर्लुग्भवति । "षह मर्षणे" "धात्वादेः षः सः" संहत इति षट् ॥

### ॥ २७० ॥ बृंहेः क्मान्नच्च हात्पूर्वः ॥ ५. ६ ॥

बृंहेः क्मान्प्रत्ययो भवति । अच्च हकारात् पूर्वः । "बृहि बृहि वृद्धौ"

इदनुबन्धत्वान्नागमः । बृंहति व्रतानि इति ब्रह्मा । अथवा बृंहति वर्धति चराचराणि भूतान्यत्र ब्रह्मा । इदं ब्रह्म । अयं ब्रह्मा । उभयं विशेषान्निर्दिष्टः प्रकृतं न बाधते इति न लुक् । ब्रह्मा धाता ।

॥ २७१ ॥ सृपिकपिललिभ्य आटक् ॥ ५. ७ ॥

एभ्य आटक्प्रत्ययो भवति । कानुबन्धोऽगुणार्थः । "सृप्लृ गतौ" सृप्यत इति सृपाटः परिमाणविशेषः ॥ "कपि चलने" इदनुबन्धत्वान्नागमः । निरनुषङ्गनिर्देशादेव नलोपः । कम्प्यत इति कपाटम् द्वारपिधानम् ॥ "लल ईप्सायाम्" चुरादाविन् । लाल्यकरणादेव ह्रस्वः । लालयतीति ललाटं प्रसिद्धम् । अथवा विकल्पेनन्ताश्चुरादयः [?] । अथवा चित्रितं लभ्यते ईप्स्यते इति ललाटम् ॥

॥ २७२ ॥ तरतेरसुड् ॥ ५. ८ ॥

"तॄ प्लवनतरणयोः" अस्मादसुड्प्रत्ययो भवति । तरतीति तिरः अन्तर्धानम् । "ॠदन्तस्येरगुणे" इति इर् ॥

॥ २७३ ॥ मिथिलसिभ्यां कुनः ॥ ५. ९ ॥

आभ्यां कुनप्रत्ययो भवति । "मिथृ सङ्गमे च" मतान्तरेण सौत्रः । मेथति मिथते वा मिथुनं स्त्रीपुंसयोर्युग्मम् ॥ "लस श्लेषक्रीडनयोः" लसतीति लसुनं कन्दविशेषः

॥ २७४ ॥ वदेरान्यः प्रशंसायाम् ॥ ५. १० ॥

वदेः प्रशंसायामान्यः प्रत्ययो भवति । "वद व्यक्तायां वाचि" संसदि निःशङ्कं वदतीति वदान्यः प्रियवाक् दानशीलः ॥

॥ २७५ ॥ वचेर्मिनिञ् चस्य गः ॥ ५. ११ ॥

वचेः मिनिञ्प्रत्ययो भवति । चस्य गो भवति प्रशंसायां गम्यमानायाम् । "वच परिभाषणे" वक्तीति वाग्मी चारुवक्ता ॥

॥ २७६ ॥ प्रीञोऽङ्गुक् ॥ ५. १२ ॥

प्रीणातेरङ्गुक्प्रत्ययो भवति । नात्र प्रशंसानुवर्तते । "प्रीञ् तर्पणे" प्रीणातीति प्रियङ्गुः धान्यविशेषः । "स्वरादित्वात्" इत्यादिना इयादेशः ॥

॥ २७७ ॥ पञ्चेरालः ॥ ५. १३ ॥

"पचि विस्तारे"। चौरादित्वात् इन्। इदनुबन्धत्वान्नागमः। पञ्चेरालप्रत्ययो भवति। पञ्चयति विस्तारयति पञ्चालः देशविशेषः ॥

[॥ २७८ ॥ [1]व्रियो ह्रिः दीर्घश्च ॥ ५. १४ ॥]

"व्रि वरणे" व्रियत इति व्रीह्रिः धान्यम् ॥

॥ २७९ ॥ आशौ शुषेः सनिक् ॥ ५. १५ ॥

"शुष शोषणे" अन्तर्भूतकारितार्थोऽयम्। आशुपूर्वः। आशावुपपदे शुषेः सनिक्प्रत्ययो भवति। आशु शोषयति रसानिति, आशु शुष्यत्यस्मादिति वा आशुशुक्षणिः अग्निः ॥

॥ २८० ॥ विशेः कानः ॥ ५. १६ ॥

अस्मात् कानप्रत्ययो भवति। "विषॢ व्याप्तौ" वेवेष्टि व्याप्नोति शिर इति विषाणम् [2]अङ्गं हस्तिदन्तं वा। कानुबन्धोऽगुणार्थः ॥

॥ २८१ ॥ कृपेः कणश्च ॥ ५. १७ ॥

कृपेः कणप्रत्ययो भवति। चकारात् कानश्च। "कृपू सामर्थ्ये" कल्प्यते रक्षितुमात्मानमिति कृपणः अदाता ॥ कल्पते शत्रून् हन्तुं कृपाणः खड्गः ॥

॥ २८२ ॥ गमेश्छो मलुक् च ॥ ५. १८ ॥

गमेश्छो भवति, मलुक् च। "गमॢ गतौ" गच्छतीति गच्छः गणविशेषः ॥

॥ २८३ ॥ कपितमिमृणिपलिकुलिकिलिभ्यः कालः ॥ ५. १९ ॥

एभ्यः कालप्रत्ययो भवति। "कपि चलने" इदनुबन्धत्वान्नागमः। कम्पत इति कपालम्। अगुणत्वादनुषङ्गलोपः, कपीति स्वरूपनिर्देशाद्वा ॥ "तमु काङ्क्षायाम्" ताम्यतीति तमालः वृक्षः ॥ "मृणि हिंसायाम्" मृणाति मृण्यते वा मृणालं पद्मकन्दः ॥ "पल गतौ" पलति पल्यते [वा] पलालं

---

1. This sūtra is missing in the ms.
2. This word is not found in the ms.

अणुव्रीह्यादि ॥ "कुल संस्त्याने" कोलयति संस्त्यायति कर्दममिति कुलालः कुम्भकारः ॥ "कील बन्धने" कीलते कील्यते वा कीलालं रुधिरं मद्यं जलं वा मलं वा ॥

॥ २८४ ॥ सर्तेर्गोऽन्तश्च ॥ ५. २० ॥

"सृ गतौ" सर्तेः कालः प्रत्ययो भवति गोऽन्तश्च । "सृ गतौ" सरति भयादिति सृगालः प्रसिद्ध एव ॥

॥ २८५ ॥ पलेराशः ॥ ५. २१ ॥

"पल गतौ" अस्मादाशप्रत्ययो भवति । पलति विस्तारं पलाशः वृक्षविशेषः ॥

॥ २८६ ॥ तॄपतिभ्यामङ्गः ॥ ५. २२ ॥

आभ्यामङ्गप्रत्ययो भवति । "तॄ प्लवनतरणयोः" तरतीति तरङ्गः वीचिः ॥ "पतॢ गतौ" पततीति पतङ्गः आदित्यः पक्षी वा ॥

॥ २८७ ॥ मृदिकुरिभ्यां कवत् ॥ ५. २३ ॥

आभ्यामङ्गप्रत्ययो भवति । स च कवत् । कानुबन्धः । "मृद क्षोदे" मृद्यते मृदङ्गः वाद्यविशेषः ॥ ["कुर शब्दे"][1] कुरतीति कुरङ्गः हरिणः ॥

॥ २८८ ॥ रौते रुक् ॥ ५. २४ ॥

रौतेर्धातो रुक्प्रत्ययो भवति । कानुबन्धोऽगुणार्थः । "रु शब्दे" रौतीति रुरुः मृगविशेषः ॥

॥ २८९ ॥ उषितृषिभ्यां क्नः ॥ ५. २५ ॥

आभ्यां क्नप्रत्ययो भवति । "उष दाहे" उषतीति उष्णः घर्मः ॥ "ञि तृषा पिपासायाम्" तृषतीति तृष्णा लोभः ॥

॥ २९० ॥ पणिकितिभ्यामवक् ॥ ५. २६ ॥

आभ्यामवक्प्रत्ययो भवति । "पण व्यवहारे च" पणायते पण्यते वा पणवः तन्तुवायः ॥ "कित कैतवे" चेकेतीति कितवः द्यूतकारः ॥

---

1. The words within brackets are omitted in the ms.

॥ २९१ ॥ चरेरमः ॥ ५. २७ ॥

चरेरमप्रत्ययो भवति । "चरिः" गत्यर्थः । चरतीति चरमः पाश्चात्यः ॥

॥ २९२ ॥ सिनोतेर्मोऽन्तो हक् ॥ ५. २८ ॥

सिनोतेर्हक्प्रत्ययो भवति, मोऽन्तश्च । "षिञ् बन्धने" सिनोति हिनस्ति जीवानिति सिंहः मृगपतिः । यद्यपि बन्धने तथापि हिंसार्थोऽनेकार्थत्वाद्धातूनाम् इति ॥

॥ २९३ ॥ तो दीर्घश्च ॥ ५. २९ ॥

सिनोतेस्तप्रत्ययो भवति दीर्घश्च धातोः । "षिञ् बन्धने" सिनोति रामं स्नेहेन सीता वैदेही । सिनोति कर्षणं धान्येन इति सीता लाङ्गलपद्धतिर्वा ॥

॥ २९४ ॥ यसिपनिभ्यां कः ॥ ५. ३० ॥

आभ्यां कप्रत्ययो भवति । "यसु प्रयत्ने" यस्यति प्रयत्नेन जपति इति यस्कः ऋषिः ॥ "पन" च । पनायते पन्यते वा पङ्कः कर्दमः ॥

॥ २९५ ॥ अंहे रिः ॥ ५. ३१ ॥

अंहेः धातोः रिः प्रत्ययो भवति । "अहि गतौ" । इदनुबन्धत्वान्नागमः । अंहत्यनेन अङ्घ्रिः पादः ॥

॥ २९६ ॥ तनोतेर्डवत् ॥ ५. ३२ ॥

तनोते रिप्रत्ययो भवति । स च डवत् । डानुबन्धोऽन्त्यस्वरादिलोपार्थः ॥
"तनु विस्तारे" सङ्ख्याविशेषं तन्वन्तीति त्रयः सङ्ख्या बहुवचनान्तः ॥

॥ २९७ ॥ सृणातेः पक् उर्च ॥ ५. ३३ ॥

सृणातेः धातोः पक्प्रत्ययो भवति । अतश्च उरादेशश्च । "सृ हिंसायाम्" सृणाति धान्यस्य तुषादीनि सूर्पः गृहोपकरणम् ॥

## ॥ २९८ ॥ कलेरङ्कः ॥ ५. ३४ ॥

कलेरङ्कः प्रत्ययो भवति । "कल गतौ संख्याने च" कलयतीति कलङ्कः काञ्छनं दोषो वा ॥

## ॥ २९९ ॥ अविकम्बिभ्यामुः ॥ ५. ३५ ॥

आभ्यामुः प्रत्ययो भवति । "अवि शब्दे" "अम्ब" इति सौत्रोऽयं धातुः[वा][1] । अम्ब्यते तृष्णार्तैरिति अम्बु जलम् ॥ "कम्बः" सौत्रः । कम्ब्यते वर्ण्यते कम्बुः शङ्खः । अथवा "कबृ वर्णे" । उणादित्वात् अस्मादेव नकारागमश्च ॥

## ॥ ३०० ॥ मुरेर्धनिः ॥ ५. ३६ ॥

मुरेः धनिप्रत्ययो भवति । इकार उच्चारणार्थः । "मुर संचूर्णने" मूर्यत इति मूर्धा शिरः । "नामिनोर्वोः" इति दीर्घः ॥

## ॥ ३०१ ॥ नौतेरत्यनौ ॥ ५. ३७ ॥

नौतेरत्यनौ प्रत्ययौ भवतः । "णु स्तुतौ" नौतीति नवतिः नव सङ्ख्या-शब्दौ ॥

## ॥ ३०२ ॥ सपेस्तितितन: ॥ ५. ३८ ॥

सपेर्धातोः तितितन्प्रत्यया भवन्ति । "षप समवाये" सपत्यध्वानं गच्छतीति सप्तिः अश्वः ॥ सप्ततिः सप्त सङ्ख्याशब्दौ ॥

## ॥ ३०३ ॥ वित्र्योः श्यतेर्डतिडतौ नः शात्पूर्वः ॥ ५. ३९ ॥

वित्रिरित्येतयोः श्यतेः डतिडतौ प्रत्ययौ भवतः । यथासङ्ख्यं शात्पूर्वो नकारः । "शो तनूकरणे" । विपूर्वः । विश्यतीति विंशतिः ॥ त्रिपूर्वः । त्रिश्यतीति त्रिंशत् । उभौ सङ्ख्याशब्दौ ॥

## ॥ ३०४ ॥ अशेरीतिः ॥ ५. ४० ॥

अशेरीतिः प्रत्ययो भवति । "अशू व्याप्तौ" अश्नुत इति अशीतिः सङ्ख्या ॥

---

1. The ms. omits the word within brackets.

॥ ३०५ ॥ सहेरस्रम् ॥ ५. ४१ ॥

षहेर्धातोः अस्रंप्रत्ययो भवति । "षह मर्षणे" । "षात्वादेः षः सः" । सहत इति सहस्रं सङ्ख्या ॥

॥ ३०६ ॥ शमेर्डतः ॥ ५. ४२ ॥

शमेः डतः प्रत्ययो भवति । "शम दम" शाम्यतीति शतम् । डानुबन्धः ॥

॥ ३०७ ॥ पञ्चेरनिः ॥ ५. ४३ ॥

पञ्चेरनिप्रत्ययो भवति । "पचि विस्तारे" । इदनुबन्धः । चुरादिः । पञ्चयन्ति विस्तारयन्ति सङ्ख्यामिति पञ्च ॥

॥ ३०८ ॥ अशेस्तोऽन्तश्च ॥ ५. ४४ ॥

अशेर्धातोः अनिप्रत्ययो भवति तोऽन्तश्च । "अशू व्याप्तौ" अश्नुत इति अष्टन् । "छशोश्च" इति षत्वम् । तवष उवर्गादिति उत्वम्.........
नवत्यादय एते सङ्ख्याशब्दाः ॥

॥ ३०९ ॥ यजेरुसिः ॥ ५. ४५ ॥

यजेरुसिप्रत्ययो भवति । "यज देव[पूजा]दिषु" इज्यन्ते पितरः अनेनेति यजुः वेदः ॥

॥ ३१० ॥ मुहेरुगूर्तकौ क्षणे ॥ ५. ४६ ॥

मुहेरुक् ऊर्तक् इत्येतौ प्रत्ययौ भवतः क्षणेऽभिधेये । "मुह वैचित्ये" मुह्यत इति मुहुः प्रतिक्षणः ॥ मुह्यतीति मुहूर्तं दिनपञ्चदशोऽन्तः ॥

॥ ३११ ॥ कुले टालेरिलुक् डश्च ॥ ५. ४७ ॥

कुले उपपदे टालेरिनन्तस्य डः प्रत्ययो भवति, इलुक् च । "टल टुल वै-[क्लव्ये]" हेताविन् । अस्योपधाया दीर्घः । कुलपूर्वः । कुलं टालयतीति कुलटा पांशुला । स्त्रियामा ॥

1. The letters within brackets are omitted in the ms.

॥ ३१२ ॥ अनेः शुः ॥ ५. ४८ ॥

अनेर्धातोः शुः प्रत्ययो भवति । "अन च" अनतीति अंशु रश्मिः ॥

॥ ३१३ ॥ तनित्यजियजिभ्यो डदिः ॥ ५. ४९ ॥

एभ्यो डदिप्रत्ययो भवति । इकार उच्चारणार्थः । "तनु विस्तारे" तनोतीति सः ॥ "त्यज हानौ" त्यजतीति त्यः ॥ "यज देवपूजासङ्गति-करणदानेषु" यजतीति यः । तद् त्यद् यद् इत्येते त्रयः शब्दाः वाच्यलिङ्गाः ॥

॥ ३१४ ॥ कायतेर्डतिडिमौ ॥ ५. ५० ॥

कायतेः डतिडिमौ प्रत्ययौ भवतः । "कै शब्दे" । "सन्ध्यक्षरान्ता-नामाकारः" । कायतीति कति सङ्ख्या ॥ कायतीति कः । डानुबन्धः सर्वत्र ॥

॥ ३१५ ॥ इणो दमक् तदश्च ॥ ५. ५१ ॥

इणो धातोः दमक् तदश्च इत्येतौ प्रत्ययौ भवतः । कानुबन्धः । "इण् गतौ" एतीति इदम् ॥ एतीति एतद् । अत्रान्यत्र गुणः । प्रथमैकवचने तु अयं इयं इदं एषः एषा एतद् स्त्रीनपुंसकेषु ॥

॥ ३१६ ॥ खण्डेर्गक् ॥ ५. ५२ ॥

खण्डेः धातोः गक्प्रत्ययो भवति । "खडि भेदे" इदनुबन्धत्वान्ना-गमः । खण्डयति भिनत्तीति खड्गः प्रसिद्धः कारितलोपः । अथ वा विकल्पेन-न्तश्चुरादयः [?] । "अनिदनुबन्धानाम्" इति नत्रादिष्टत्वात् इदनुबन्धस्यापि नलोपः ॥

॥ ३१७ ॥ कुटिजटिभ्यां किलः ॥ ५. ५३ ॥

आभ्यां किलप्रत्ययो भवति । "कुट कौटिल्ये" कुटतीति कुटिलः वक्रः ॥ "जट झट संघाते" जटतीति जटिलः जटावान् । यः केशान् जटीकरोति सोऽर्थात् जटिल उच्यते ॥

॥ ३१८ ॥ पटेरोलः ॥ ५. ५४ ॥

पटेरोलप्रत्ययो भवति । "अट पट" पटतीति पटोलः फलम् ॥

॥ ३१९ ॥ सहेरुरिः ॥ ५. ५५ ॥

सहेर्धातोः उरिप्रत्ययो भवति । "षह मर्षणे" सहतीति सहुरिः पृष्ठम् ॥

॥ ३२० ॥ अमेर्धुः ॥ ५. ५६ ॥

अमेर्धुः प्रत्ययो भवति । "अम द्रम गतौ" अम्यते जलार्थिभिरिति अन्धुः कूपः ॥

॥ ३२१ ॥ ह्रसेर्वः ॥ ५. ५७ ॥

ह्रसेर्वप्रत्ययो भवति । "ह्रस शब्दे" ह्रसति उच्चारणकाले मन्दं शब्दं करोतीति ह्रस्वः लघुः ॥

॥ ३२२ ॥ किरतेरूरो रत्वम् ॥ ५. ५८ ॥

किरतेः धातोः ऊरप्रत्ययो भवति । ऋकारस्य च रत्वम् । "कॄ विक्षेपणे" किरति दयां क्रूरः दुष्टः ॥

॥ ३२३ ॥ प्रथेरमः ॥ ५. ५९ ॥

प्रथेरमप्रत्ययो भवति । "प्रथ प्रख्याने" प्रथते प्रथ्यते वा प्रथमः आद्यः ॥

॥ ३२४ ॥ स्वृभृभ्यां गः ॥ ५. ६० ॥

आभ्यां गः प्रत्ययो भवति । "स्वृ शब्दे" स्वर्यते पुण्यार्थिभिरिति स्वर्गः देवलोकः ॥ "डु भृञ्" बिभर्ति लोकान् इति भर्गः महेश्वरः ॥

॥ ३२५ ॥ पतेर्नीः ॥ ५. ६१ ॥

पतेर्नीप्रत्ययो भवति । "पतॢ गतौ" पतति पाति पतिमिति पत्नी कलत्रम् ॥

॥ ३२६ ॥ शमिकमिभ्यां बलः ॥ ५. ६२ ॥

आभ्यां बलप्रत्ययो भवति । "शमु दमु" शाम्यतेऽनेनेति शम्बलं पाथेयम् ॥ "कमु कान्तौ" काम्यत इति कम्बलः प्रसिद्धः ॥

॥ ३२७ ॥ उषिकुषिगार्तिभ्यस्थः ॥ ५. ६३ ॥

एभ्यस्थप्रत्ययो भवति । "उष दाहे" उष्यते तसाक्तादिना सौकुमार्यादिति ओष्ठः दन्तवासः ॥ "कुष निष्कर्षे" कुष्यते अस्माद्धान्यमिति कोष्ठः धान्यस्थानम् ॥ "गै शब्दे" गायत इति गाथा प्राकृतरचनाविशेषः ॥ "ऋ गतौ" अर्यत इति अर्थः । अथवा पुण्यकृतमियर्ति इत्यर्थः द्रव्यम् ॥

॥ ३२८ ॥ माङः सः ॥ ५. ६४ ॥

माङः सप्रत्ययो भवति । "माङ् माने" मीयते घटिकादिभिः मासः त्रिंशदहोरात्रः ॥

॥ ३२९ ॥ मनेर्दीर्घश्च ॥ ५. ६५ ॥

मनेः सप्रत्ययो भवति, दीर्घश्च । "मन ज्ञाने" मन्यते संभाव्यते शरीरोपचयमनेन इति मांसं पिशितम् ॥

॥ ३३० ॥ अमेः शुकः ॥ ५. ६६ ॥

अमेः शुकप्रत्ययो भवति । [" [1]अम गत्यादिषु" अमतीति अंशुकः वस्त्रम् ॥

॥ ३३१ ॥ हञो म्यः ॥ ५. ६७ ॥

हञो म्यप्रत्ययो भवति ।] "हञ् हरणे" हरति हरते वा मनांसि चारुतया इति हर्म्यम् । अथवा हरति चन्द्रकलानीति हर्म्यं धवलगृहम् ॥

इति श्री दौर्गसिंह्यां उणादिवृत्तौ

पञ्चमः पादः ॥

---

1. The words within brackets are omitted in the ms.

## ॥ अथ षष्ठः पादः ॥

### ॥ ३३२ ॥ पटिकमिमुशिकुशिभ्यः कलः ॥ ६. १ ॥

एभ्यः कलः प्रत्ययो भवति । "पट गतौ" पटतीति पटलं समूह-मण्डलम् ॥ "कमु कान्तौ" कम्यते भ्रमरैः इति कमलं पद्मम् ॥ "मुश खण्डने" मुश्यते धान्यमनेनेति मुशलं कण्डनोपकरणम् ॥ "कुश श्लेषणे" कुश्यते पृच्छ्यते अनेनेति कुशलं क्षेमम् । धातूनामनेकार्थत्वात् प्रश्नेऽपि वर्तते ॥

### ॥ ३३३ ॥ कुटेः कीरः ॥ ६. २ ॥

कुटेः कीरः प्रत्ययो भवति । "कुट कौटिल्ये" कुटतीति कुटीरं गृहविशेषः ॥

### ॥ ३३४ ॥ तसेः करः ॥ ६. ३ ॥

तसेः करप्रत्ययो भवति । "तसु दसु उपक्षये" तस्यति परद्रव्यमिति तस्करः चोरः ॥

### ॥ ३३५ ॥ पतिवपिशुकिचक्यगिभ्यो रक् ॥ ६. ४ ॥

एभ्यो रक्प्रत्ययो भवति । "पतॢ गतौ" पतति पत्यते वा पर्णं पत्रं वाहनं वा ॥ "टु वप्" वपतीति वप्रं प्राकारः कूटं वा ॥ "शुक गतौ" शुक्यते गम्यते कार्यार्थं दैत्यैः इति शुक्रः दैत्यगुरुः । शुक्रं रेतश्च ॥ "चक तृप्तौ प्रतिघाते च" चकतीति चक्रं प्रसिद्धम् ॥ "अगिः" गत्यर्थः । अङ्गति गच्छति अग्रं प्रान्तं आद्यं वा ॥

### ॥ ३३६ ॥ दुनोतेः दीर्घश्च ॥ ६. ५ ॥

दुनोते रक्प्रत्ययो भवति दीर्घश्च । "टु दु उपतापे" दुनोतीति दूरं विप्रकृष्टम् ॥

### ॥ ३३७ ॥ पुलिनलिबलिमलिद्रुहिभ्यः किनः ॥ ६. ६ ॥

एभ्यः किनप्रत्ययो भवति । "पुल महत्त्वे" पोलति महत्त्वं याति इति पुलिनं नदीतटम् ॥ "णल गन्धे" नलतीति नलिनं कमलम् ॥

"बल प्राणने" बलतीति बलिनः बलवान् ॥ "मल धारणे" मलति मल्यते वा मलिनः प्रसिद्धः ॥ "द्रुह जिघांसायाम्" द्रुह्यतेऽसुरेभ्यः द्रुहिणः । अथ वा द्रुह्यत्यशिष्टान् इति द्रुहिणः ब्रह्मा ॥

॥ ३३८ ॥ खलेरीनश्च ॥ ६. ७ ॥

खलेरीनप्रत्ययो भवति, किनश्च । "खल चलने" खलति अश्वमिति खलीनं खलिनं कविकम् ।

॥ ३३९ ॥ द्दणातेर्घुक् ॥ ६. ८ ॥

द्दणातेर्धातोः घुप्रत्ययो भवति । कानुबन्धो यण्वत् । "दृ विदारणे" दृणाति उच्चारणकाले मुखं विदारयति इति दीर्घः । कृदन्तस्य "आरनमिनोर्वि" इति दीर्घः । प्रांशुः ॥

॥ ३४० ॥ तमेरूलञ् बोऽन्तश्च ॥ ६. ९ ॥

तमेरूलञ्प्रत्ययो भवति, बोऽन्तश्च । "तमु काङ्क्षायाम्" तम्यते आकाङ्क्ष्यत इति ताम्बूलं प्रसिद्धम् ॥

॥ ३४१ ॥ मनेरुष्यः ॥ ६. १० ॥

मनेर्धातोरुष्यप्रत्ययो भवति । ["मनै ज्ञाने"] मन्यते सुखदुःखादिक-मिति मनुष्यः मनुजः ॥

॥ ३४२ ॥ मानेरुषः ॥ ६. ११ ॥

मानेरुषप्रत्ययो भवति । "मान पूजायाम्" मानयति मान्यत इति [वा] मानुषः मानवः ॥

॥ ३४३ ॥ मृङस्त्यः ॥ ६. १२ ॥

मृङः त्यप्रत्ययो भवति । "मृङ् प्राणत्यागे" म्रियते प्राणैर्वियुज्यते इति मर्त्यः मनुजः प्रसिद्धः ॥

---

१. The words within brackets are omitted in the ms.

॥ ३४४ ॥ कृपेरटः ॥ ६. १३ ॥

कृपेरटप्रत्ययो भवति । "कृपू सामर्थ्ये" कल्पत इति कर्पटम् वस्त्रम् ॥

॥ ३४५ ॥ कॄभूभ्यां कनः ॥ ६. १४ ॥

आभ्यां कनप्रत्ययो भवति । "कॄ विक्षेपे" किरति विक्षिपत्यन्धकार-मिति किरणः रश्मिः ॥ "भू सत्तायाम्" भवन्ति भूतान्यस्मादिति भुवनं जगत् । कृदन्तस्योरस्वरादाविवर्णो वर्णोऽन्तस्येत्यादिना उङ् [?] ॥

॥ ३४६ ॥ कुटेष्टिमक् ॥ ६. १५ ॥

कुटेष्टिमक्प्रत्ययो भवति । "कुट कौटिल्ये" कुटयत इति कुट्टिमं बद्धभूमिकम् ॥

॥ ३४७ ॥ कषेरायः ॥ ६. १६ ॥

कषेरायप्रत्ययो भवति । "कष हिंसायाम्" कषतीति कषायः रसविशेषः, सौरभ्यं वा ॥

॥ ३४८ ॥ वलिमलिगोमिभ्योऽयः ॥ ६. १७ ॥

एषामयप्रत्ययो भवति । "वल भृतौ" वल्यत इति वलयं हस्तक-टकम् ॥ "मल धारणे" मलति चन्दनादिगन्धमिति मलयः पर्वतः वाटिका च ॥ "गोम उपलेपने" गोम्यते भूरनेनेति गोमयं गोशकृत् ॥

॥ ३४९ ॥ श्रृणातेरावः ॥ ६. १८ ॥

श्रृणातेरावप्रत्ययो भवति । "शॄ हिंसायाम्" शीर्यते मनागापोऽनेनेति शरावः मृत्पात्रविशेषः ॥

॥ ३५० ॥ मडिकुडिमङ्गिभ्योऽलः ॥ ६. १९ ॥

एभ्योऽलः प्रत्ययो भवति । "मडि भूषायाम्" इदनुबन्धत्वान्नागमः । मण्ड्यत इति मण्डलं वृत्तम् ॥ "कुडि स्नेहने" इदनुबन्धः । कुण्ड्यत इति

कुण्डलं कर्णाभरणम् ॥ "मगि:" गत्यर्थः। मङ्गति सुकृतिनमिति मङ्गलं भद्रम् ॥

॥ ३५१ ॥ कन्देररः ॥ ६. २० ॥

कन्देररप्रत्ययो भवति। "कदि वैक्लव्ये" इदनुबन्धत्वान्नागमः। कन्दति विक्लवो भवति अत्र नरः कन्दरः पाषाणरन्ध्रप्रदेशः ॥

॥ ३५२ ॥ कुलेः किशः ॥ ६. २१ ॥

कुलेः किशप्रत्ययो भवति। "कुल संस्त्याने" भयदत्वात् पर्वतानां कोलति सङ्घीकरोति इति कुलिशं वज्रम् ॥

॥ ३५३ ॥ पटिजटिभ्यामलिञ् ॥ ६. २२ ॥

आभ्यामलिञ्प्रत्ययो भवति। "पट गतौ" पटतीति पाटलिः ॥ "जट संघाते" जटति जटयते वा जटालिः वृक्षविशेषः। ञानुबन्ध इज्वद्भावार्थः। अस्योपधाया दीर्घः ॥

॥ ३५४ ॥ राते रिफः ॥ ६. २३ ॥

राते रिफप्रत्ययो भवति। "रा ला दाने" रातीति रेफः वर्णविशेषः ॥

॥ ३५५ ॥ लिशेः सक् ॥ ६. २४ ॥

लिशेः सक्प्रत्ययो भवति। "लिश श्लेषणे" लिशतीति लिक्षा ईषद्वपुः प्राणी। "छशोश्च" षत्वम्। "षढोः कस्सि" कत्वम्। निमित्वात् षत्वम्। स्त्रियामा ॥

॥ ३५६ ॥ ध्वनेः क्षो दीर्घश्च ॥ ६. २५ ॥

ध्वनेः क्षप्रत्ययो भवति दीर्घश्च। "ध्वन शब्दे" ध्वनतीति ध्वाङ्क्षः वायसः बकश्च ॥

॥ ३५७ ॥ दीधीङो ङितिः ॥ ६. २६ ॥

दीधीङो धातोः ङितिप्रत्ययो भवति। "दीधीङ् दीप्तिदेवनयोः" दीधीते दीप्यते इति दीधितिः रश्मिः ॥

॥ ३५८ ॥ अतेस्त्रिः ॥ ६. २७ ॥

अतेस्त्रिः प्रत्ययो भवति । "अत सातत्यगमने" अतति धर्मार्थमिति अतते वा अत्रिः ऋषिः ॥

॥ ३५९ ॥ वचेरालाटौ दीर्घश्च ॥ ६. २८ ॥

वचेः धातोः आलाटौ प्रत्ययौ भवतः दीर्घश्च । "वच परिभाषणे" अत्यर्थं वक्तीति वाचालः ॥ वाचाटः बहुभाषी ॥

॥ ३६० ॥ खलेरतिकः ॥ ६. २९ ॥

खलेरतिकः प्रत्ययो भवति । "खल चलने" खलतीति खलतिकः देशः । तद्वनानि खलतिकम् ॥

॥ ३६१ ॥ नञि पतेर्यः ॥ ६. ३० ॥

नञ्युपपदे पतेर्यो भवति । "पतॄ गतौ" नयन्ति येन जातेन पूर्वजाः । नस्य तत्पुरुषे लोप्यः मामात्यविवक्षायाम् [?] । पौत्रोऽप्यपत्यमित्युच्यते । अपत्यं पुत्रः पौत्रश्च ॥

॥ ३६२ ॥ कलेरशः ॥ ६. ३१ ॥

कलेरशप्रत्ययो भवति । "कल गतौ संख्याने च" कलत्युदकानीति कलशः कुम्भः ॥

॥ ३६३ ॥ हृञष्टीतकन् ॥ ६. ३२ ॥

हरतेष्टीतकन्प्रत्ययो भवति । "हृञ् हरणे" हरति रोगानिति हरीतकी । टकारो नदाद्यर्थः ॥

॥ ३६४ ॥ उन्देः ककः ॥ ६. ३३ ॥

उन्देः ककप्रत्ययो भवति । "उन्दी क्लेदने" उनत्ति क्लिद्यते अनेन वस्त्विति उदकं जलम् ॥

॥ ३६५ ॥ पातेरकः ॥ ६. ३४ ॥

पातेरकप्रत्ययो भवति । "पतॢ गतौ" हेताविन् । पातयति पत्यते वा तपस इति पातकम् पापम् ॥

॥ ३६६ ॥ उन्देरनो नलोपश्च ॥ ६. ३५ ॥

उन्देरनः प्रत्ययो भवति नलोपश्च । "उन्दी क्लेदने" उनत्ति ओदनम् भुक्तम् गुण उतः ॥

॥ ३६७ ॥ सिनोतेर्नः ॥ ६. ३६ ॥

सिनोतेः नः प्रत्ययो भवति । "षिञ् बन्धने" सिनोति परबलमिति सीयते वा सेना कटकम् । स्त्रियामा ॥

॥ ३६८ ॥ द्यतेरिच्च ॥ ६. ३७ ॥

द्यतेः नः प्रत्ययो भवति, अकारस्य इच्च । "दो अवखण्डने" द्यति अन्धकारमिति दिनं वासरः ॥

॥ ३६९ ॥ मुहेर्घिक् हस्य गः ॥ ६. ३८ ॥

मुहेर्घिक्प्रत्ययो भवति, हस्य च गः । "मुह वैचित्ये" मुह्यतीति मुग्धा अप्रगल्भा । कोऽगुणार्थः ॥

॥ ३७० ॥ सचेः लिलश्च चस्य लुक् ॥ ६. ३९ ॥

सचेः लिलप्रत्ययो भवति, चस्य लुक् च । "षच सेचने" सचत इति सलिलं जलम् ॥

॥ ३७१ ॥ कुरेः करकः ॥ ६. ४० ॥

कुरेः धातोः करकप्रत्ययो भवति । "कुर शब्दे" कुरतीति कुरकरः श्वा ॥

॥ ३७२ ॥ आप्नोतेः क्विप् ह्रस्वः ॥ ६. ४१ ॥

आप्नोतेः क्विप्प्रत्ययो भवति, ह्रस्वश्च । "आप्लृ व्याप्तौ" आप्नुवन्ति समुद्रमिति आपः जलानि । अपश्च । जसि दीर्घः ॥

॥ ३७३ ॥ वन्देस्त्रश्छादेशश्च ॥ ६. ४२ ॥

वन्देः त्रप्रत्ययो भवति, छादेशश्च । "वदि अभिवादनस्तुत्योः" इदनुबन्धत्वान्नागमः । वन्दते उपाध्यायमिति छात्रः विद्यार्थी ॥

॥ ३७४ ॥ कलेरहः ॥ ६. ४३ ॥

कलेरहप्रत्ययो भवति । "कल गतौ संख्याने च" । चुरादिः कलयत्युभयोः माहात्म्यमिति कलहः प्रसिद्धः ॥

॥ ३७५ ॥ उम्भेरिक् द्विश्च ॥ ६. ४४ ॥

उम्भेरिक्प्रत्ययो भवति द्विरादेशश्च । इकारोक्तः सविभक्तिरादेशो स्वरः [?] । "उभ उम्भ पूरणे" उभत इति द्वौ पदार्थौ । द्विवचनमिह ॥

॥ ३७६ ॥ नमिसमिभ्यामञ् ॥ ६. ४५ ॥

आभ्यामञ्प्रत्ययो भवति । "णमु प्रह्वत्वे" नमति नम्यते वा नाम संज्ञा ॥ "षम स्तम" समतीति साम वेदः । ञानुबन्ध इज्वद्भावार्थः । तेन दीर्घत्वम् ॥

॥ ३७७ ॥ कूजेरिलो जः किश्च ॥ ६. ४६ ॥

कूजेरिलः प्रत्ययो भवति । जस्य कत्वम् । "कूज अव्यक्ते शब्दे" कूजतीति कोकिलः पक्षिविशेषः ॥

॥ ३७८ ॥ मयतेरूरोखौ ॥ ६. ४७ ॥

मयतेः धातोरूरोख इत्येतौ प्रत्ययौ भवतः । "मीङ् हिंसायाम्" मयत इति मयूरः कलापी ॥ मयते विस्तारं यातीति मयूखः किरणः ॥

॥ ३७९ ॥ अङ्गेरुलः ॥ ६. ४८ ॥

अङ्गेरुलप्रत्ययो भवति । ["अगिः" गत्यर्थः । अङ्गतीति अङ्गुलः ॥

॥ ३८० ॥ कनिचनिभ्यामकः ॥ ६. ४९ ॥

आभ्यामकः प्रत्ययो भवति ।] "कनी दीप्तिकान्तिगतिषु" कनतीति कनकं सुवर्णम् ॥ ["चन श्रद्धोपहननयोः"] चनत इति चनकः धान्यविशेषः ॥

---

१. The words within brackets are omitted in the ms.

## ॥ ३८१ ॥ चटिवटिकटिभ्य उश्च ॥ ६. ५० ॥

एभ्य उप्रत्ययो भवति । "चट भेदे" चटति माधुर्यात् हृदयं भिनत्ति इति चटुः प्रियवाक्यम् ॥ "वट वेष्टने" वटति वेष्टति इति वटुः माणवकः ॥ "कट गतौ" कटतीति कटुः रसविशेषः ॥ चकारादकश्च । चटति भिनत्तीति चटकः गृहपक्षी ॥ वटकः पक्वान्नविशेषः ॥ कटति भुजमावृणोतीति कटकः हस्ताभरणम् । कटकं सेना च ॥

## ॥ ३८२ ॥ अशेर्मकः ॥ ६. ५१ ॥

अशेर्मकप्रत्ययो भवति । "अशू व्याप्तौ" अश्नुते इति अश्मकाः देशः ॥

## ॥ ३८३ ॥ मङ्गेः कधः ॥ ६. ५२ ॥

मङ्गेः कधप्रत्ययो भवति । "मगिः" गत्यर्थः । इदनुबन्धत्वान्नागमः । मङ्गतीति मगधः देशो राजा च । मगधा पुरी । कानुबन्धत्वान्नलोपः ॥

## ॥ ३८४ ॥ दिवेर्दिविः ॥ ६. ५३ ॥

दिवेः दिविप्रत्ययो[?] भवति । "दिवु क्रीडादिषु" दीव्यन्ति क्रीडन्ति अत्र पुण्यवन्त इति द्यौः स्वर्गः ॥

## ॥ ३८५ ॥ कलेरिङ्गः ॥ ६. ५४ ॥

कलेरिङ्गः प्रत्ययो भवति । "कल गतौ" कलतीति कलिङ्गः देशः ॥

## ॥ ३८६ ॥ वसेरिष्ठः ॥ ६. ५५ ॥

वसेरिष्ठः प्रत्ययो भवति । "वस निवासे" वसति तपसे वसिष्ठः ऋषिः ॥

## ॥ ३८७ ॥ उङो मक् ॥ ६. ५६ ॥

उङो मक्प्रत्ययो भवति । "उङ् शब्दे" उवत इति उमा पार्वती ॥

॥ ३८८ ॥ असिकुषिभ्यां सिक् ॥ ६. ५७ ॥

आभ्यां सिक्प्रत्ययो भवति । "अशू व्याप्तौ" अश्नुते व्याप्नोत्यासनेन घटादीनर्थानिति अक्षि नयनम् ॥ "कुष निष्कर्षे" कुष्णातीति कुक्षिः उदरैकदेशः । "छशोश्च" इति षत्वम् । "षढोः कस्सि" इति कत्वम् । "कष संयोगे" क्षः ॥

॥ ३८९ ॥ अतेर्मन् दीर्घश्च ॥ ६. ५८ ॥

अतेर्मन्प्रत्ययो भवति दीर्घश्च । "अत सातत्यगमने" अतति संसारे सततं गच्छतीति आत्मा विश्वरूपः ॥

॥ ३९० ॥ वनिस्तस्य दः ॥ ६. ५९ ॥

अतेर्वनिप्रत्ययो भवति, तस्य दश्च । इकार उच्चारणार्थः । "अत सातत्यगमने" अतति सन्ततं गच्छति जनोऽत्र अध्वा मार्गः ॥

॥ ३९१ ॥ धिषेर्न्यक् ॥ ६. ६० ॥

धिषेः न्यक्प्रत्ययो भवति । "धिष् शब्दे" दिधेष्टि शब्दं करोति इति धिष्ण्यं गृहम् । नस्य णत्वम् ॥

॥ ३९२ ॥ जलेर्मञ् ॥ ६. ६१ ॥

जलेर्मञ्प्रत्ययो भवति । "जल अपवारणे" । चुरादिः । जाल्यते जाल्मः मूर्खः । कारितलोपे आनुबन्धत्वात् दीर्घः ॥

॥ ३९३ ॥ क्लिशेः कोरो ललोपश्च ॥ ६. ६२ ॥

क्लिशेः कोरप्रत्ययो भवति ललोपश्च । "क्लिशू विबाधने" क्लिश्यत इति किशोरः बालोऽश्वः । कानुबद्धत्वादगुणत्वम् ॥

॥ ३९४ ॥ उषेरधिः ॥ ६. ६३ ॥

उषेरधिप्रत्ययो भवति । "उष दाहे" उषतीति ओषधिः भेषजम् ॥

॥ ३९५ ॥ कनेरुटो मकिश्च ॥ ६. ६४. ॥

कनेरुटप्रत्ययो भवति, धातोः मकिरादेशश्च । "कनी" दीप्त्यादिषु । कनतीति मकुटः शेखर. ॥

## ॥ ३९६ ॥ सुखेः को मुखिश्च ॥ ६. ६५ ॥

सुखेः कः प्रत्ययो भवति, धातोः मुखिश्च । इकार उच्चारणार्थः । "सुख दुःख तत्क्रियायाम्" चौरादिः । सुखयति अन्नादिखादनेनेति मुखं वक्त्रम् । कानुबन्धः, तेनागुणत्वम् ॥

## ॥ ३९७ ॥ महेर्हस्य घः ॥ ६. ६६ ॥

महेः कः प्रत्ययो भवति, हस्य घत्वं च । "अर्ह मह पूजायाम्" महतीति मघा नक्षत्रम् ॥

## ॥ ३९८ ॥ मुहेर्गुणश्च ॥ ६. ६७ ॥

मुहेः कः प्रत्ययो भवति । हस्य घः । गुणत्वम् । "मुह वैचित्ये" मुह्यतीति मोघः विफलः ॥

## ॥ ३९९ ॥ सावमेरिन् दीर्घश्च ॥ ६. ६८ ॥

सावुपपदे अमेर्धातोः इन्प्रत्ययो भवति, दीर्घश्च । "अमु गतौ" शोभनममति स्वामी प्रभुः । "इन्हन्पूषा" इत्यादिना सौ

शब्दानामानन्त्यात् व्युत्पत्तिर्दृश्यते येषाम् ।
तेषां विज्ञैः कार्या मान्योर्धातोः ततः प्रत्ययान्ताम् [?] ॥

इति दौर्गसिंह्यामुणादिवृत्तौ

षष्ठः पादः समाप्तः

# INDEX OF SŪTRAS


अगिश्रुश्रियुवाहिभ्यो निः १७७

अङ्गिमदिमन्थिकडिमृजिभ्य आरः १४६

अङ्गेरुलः ३७९

अङ्गयतिभ्यामुलिथि १५७

अजिजन्यतिरशिपणिभ्यः २००

अजिरादयः २४

अञ्जेरलिः १६९

अतिचमिरभियुभ्योऽसः १३७

अतेर्मन् दीर्घश्च ३८९

अतेस्त्रिः ३५८

अदि भुवो डुतः २१९

अनुनासिकान्ताड्डुः ३७

अनेहसोऽप्सरसोऽङ्गिरसः २५२

अनेः शुः ३१२

अपष्ठ्वादयः १५

अभावीशेः कुः २६५

अमिनक्षिकडिभ्योऽत्रः १३२

अमेर्धुः ३२०

अमेर्मोऽन्तश्च २६०

अमेः शुकः ३३०

अर्चिशुचिहुसृपिछदिछर्दिभ्यः १०२

अर्तिहुसुधृक्षिणीपदमायास्तुभ्यो ५३

अर्तेरत्निः १६८

अर्तेरन्यः १२९

अर्तेरुश्च २६१

अर्तेरू च १२

अवमह्योष्टिषः २०

अविकम्बिभ्यामुः २९९

अवितॄस्तृतन्त्रिभ्य ईः १६१

अवे भृञः ६९

अशिलटि ५९

अशेरीतिः ३०४

अशेर्मकः ३८२

अशेस्तोऽन्तश्च ३०८

असिकुषिभ्यां सिक् ३८८

अहिकम्प्योर्नलोपश्च १९८

अंहे रिः २९५

आङि णिनिः २४२

आङि वसेरथः १३५

आङ्परयोः खनिशृभ्यां डुः १६

आप्नोतेः क्विप् ह्रस्वः ३७२

आशौ शुषेः सनिक् २७९

इणो दमक् तदश्च ३१५

इणो यण्वत् १५२

इण्जिकृषिभ्यो नक् १०९

इण्भीकापाशल्यर्चिकृदाधाराभ्यः ११५

इन्दियुधिश्याधूहिभ्यो मक् ५५

इल्वलपल्वलशुक्लतण्डुलशिथिल ४६

| सूत्र | संख्या |
|---|---|
| इषिमृषिभिदिगृधि | १० |
| इषेः किकः | १२३ |
| इषेः सुक् | १६० |
| इष्यसिभ्यां तकः | १५१ |
| इः सर्वधातुभ्यः | १४१ |
| उङो मक् | ३८७ |
| उन्देरनो नलोपश्च | ३६६ |
| उन्देः ककः | ३६४ |
| उम्भेरिक् द्विश्च | ३७५ |
| उल्बादयः | १८९ |
| उषिकुषिगार्तिभ्यस्थः | ३२७ |
| उषितृषिभ्यां क्नः | २८९ |
| उषिरञ्जिशृभ्यो यण्वत् | २५३ |
| उषेरधिः | ३९४ |
| उषेर्जश्च | २५५ |
| ऊर्मिभूमिरश्मयः | १५९ |
| ऋकृतृवृञ्यमिदार्यर्जिभ्य उनः | ११८ |
| ऋतृसृधृञ्धम्यशाविवृतिग्रहिभ्यो | १०१ |
| ऋपृवपिचक्षि | १०४ |
| ऋषिवृषिभ्यां | १४० |
| एतेरिज्वत् | १०५ |
| कचेः छः | २१५ |
| कच्छ्वादयः | ३४ |
| कठिचकिभ्यामोरः | २३१ |
| कणेष्ठः | ४२ |
| कनिचनिभ्यां कः | ३८० |
| कनेरुटो मकिश्च | ३९५ |
| कन्देररः | ३५१ |
| कपितमिमृणिपलिकुलि | २८३ |
| कमिमनिजनिवसि | २७ |
| कमेरठः | ३९ |
| कलेरङ्कः | २९८ |
| कलेरशः | ३६२ |
| कलेरहः | ३७४ |
| कलेरिङ्गः | ३८५ |
| कषेरायः | ३४६ |
| कायतेर्डतिडिमौ | ३१४ |
| किञ्जरयोः श्रिण्भ्याम् | २ |
| किरतेरूरो रत्वम् | ३२२ |
| किल्बिषाव्यथिषौ | २२ |
| कीनाशाङ्कुशौ | २४६ |
| कुङोररक् | १४५ |
| कुटिजटिभ्यां किलः | ३१७ |
| कुटेर्मलः | २३७ |
| कुटेष्टिमक् | ३४६ |
| कुटेः कीरः | ३३३ |
| कुणिपीङ्भ्यां कालः | ४४ |
| कुन्दादयः | १९१ |
| कुरेः करकः | ३७१ |
| कुले टालेरिलुक् डश्च | ३११ |
| कुलेः किशः | ३५२ |
| कूजेरिलो जः किश्च | ३७७ |
| कृके वचो घुण् | ४ |
| कृगृजागृभ्यः किः | १६४ |
| कृञः पासः | २४८ |
| कृञादिभ्यो ऋः | २०९ |

कृतिभिदिलतिभ्यो १५०
कृतॄभ्यामीषः १७३
कृतेः स्नक् २६२
कृधूवाभ्यः १२०
कृपेरटः ३४४
कृपेः कणश्च २८१
कृवापाजिमि १
कृशृशलिगर्दि १३९
कृषिचमितनि ३१
कृषेर्वृद्धिर्वा २०८
कृग्रो ऋत उश्च ११
कृतॄकृपिभ्यः २१६
कृपॄवृञ् ९३
कृभूभ्यां कनः ३४५
कृशॄशौण्डृभ्यः १७५
केत्वादयः २८
क्रिय इकः ७८
क्लिशेः कोरो ३९३
क्षिपिध्रुवि २०८
क्षीरोशीर १७६
खञ्जेरकः १६६
खण्डेर्गक् ३१६
खर्जिकृपिमिसि १८७
खलेरतिकः ३६०
खलेरीनश्च ३३८
गण्डिमण्डिभ्यो १४३
गमेरिनिः २४१
गमेर्गः २१३
गमेर्डोः ८६
गमेश्छो २८२
गृनाम्न्युपधात् १४२
ग्रसेरा च ५४
ग्लानुदिभ्यां ८७
घर्मसीमाग्रोष्माधमाः ५६
घुणेर्डोरः २३२
घृसिदूभ्यः क्तः १२५
चटिवटिकटिभ्य ३८१
चतिकटश्वृञ् १०६
चतेर्वारः २४०
चन्द्रे मातेः २५१
चरेरमः २९१
चिमिदिभ्यां २३४
छदेर्नश्च २५९
छव्यादयः १६५
छित्वरादयः १०८
जटामर्कटौ १८५
जत्र्वादयः १९३
जनिभनिदसिभ्यो १९५
जनेर्घः २१४
जलेर्मञ् ३९२
जर्ततातपलितसुरतलोष्टाः १२६
जीविशिवसिमासिवहि १४४
जॄवृभ्यामूथः १३६
ज्योतिरादयः १०३
तनित्यजियजिभ्यो ३१३
तनेः कयः ८३

तनोतेर्डवत् २९६
तमेरूलञ् ३४०
तम्यमिजिनां ७४
तरतेरसुड् १७२
तसेः करः ३३४
तिजेर्दीर्घश्च २६४
तिन्तिडिकादयः १२४
तिमिरुधिमन्दिचन्दि २३
तृपनिभ्यामङ्गः २८६
तो दीर्घश्च २९३
त्रो दोऽन्तश्च ३२
द्रमेर्डोस् ८९
दरिद्रातेर्यालोपश्च ३३
दंशेः कनिः २६७
दामारिवृभ्यो ६५
दिवेर्दिविः ३८४
दिवेः ऋन् ९६
दीधीङो ङितिः ३५७
दुषेरिकः १७२
दुनोतेः दीर्घश्च ३३४
दृणातेर्घुक् ३३९
दृगृभ्यां भः १५२
द्यतेरिश्च ३६८
धावसिद्रुभ्यो १११
धिषेर्ण्यक् ३९१
धृञ्वासिभ्यां २०४
धृञ् ५१
धृषेर्द्धिष ९४
धेन्वादयः ६७
ध्वनेः क्षो दीर्घश्च ३५६
नञि च नन्देः ९७
नञि जहातेः ६२
नञि पतेर्यः ३६१
नमिसमिभ्यामञ् ३७६
नावञ्चेः १४
निदलिभ्यां मिः १५८
नियो अनुबन्धश्च ९९
नीपादयः ११४
नीविः २०२
नौतेरत्यनौ ३०१
नौ सदि १०७
न्युदोः शीङ्भ्याम् ७०
पञ्चेरनिः ३०७
पञ्चेरालः २७७
पटिकमिमुशिकुशिभ्यः ३३२
पटिजटिभ्यां ३५३
पटेरोलः ३१८
पटर्यसिवसि ६
पणिकितिभ्यां २९०
पतिचण्डि ४३
पतिवपि ३३५
पतेर्नीः ३२५
परमेष्ठी २४४
परौ व्रजेश्च ८२
पर्जन्यपुण्ये १३१
पलेराशः २८५

पातेरकः ३६५
पातेर्डतिः १७९
पातेः पः ११३
पिशुनफाल्गुनौ ११९
पीम्योरुः १९२
पुलिनलि ३३७
पुषो यण्वत् २२९
पूञो ह्रस्वश्च २३५
पूषादयः ६३
पृणातेः कुषः १८१
पृषिरञ्जिभ्यां यण्वत् १३४
पृष्ठयूथप्रोथाः ७१
प्रथेरमः ३२३
प्रीञोऽङ्गुक् २७६
बन्धेर्ब्रधिश्च ११०
बलाकादयः १६७
बृंहेः कमान्नच्च २७०
भियः षुरन्तो ५८
भीशीङ्भ्यामानकः १२१
[भुंजिमृङ्भ्योः] युक्त्युकौ ९२
भूस्थाभ्यां २४३
भूस्वदिभ्यः १८०
भृञोऽतः १३३
भृमृतृचरि ५
भृवमिकुभ्यः २४५
भ्रमेर्डूः ८८
भ्रस्जेः सलोपश्च १३
मकुरदर्दुर १८
मङ्गेः कथः ३८३
मङ्गेर्नलुगवन्तश्च २६८
मञ्जूषादयः १८३
मडिकुडि ३५०
मदेः स्यः २२६
मथ्यकिवासि १७
मथ्यसिवसि २२७
मनिजनि ८
मनेरुष्यः ३४१
मनेर्दीर्घश्च ३२९
मन्यतेः किरत १९७
मयतेरूरोखौ ३७८
महेर्हस्य घः ३९७
माङः सः ३२८
मानेरुषः ३४२
मायाछाया २२३
मिथिलसिभ्यां २७३
मुदिगृभ्यां ४९
मुरेर्धनिः ३००
मुहेर्लमूर्तकौ ३१०
मुहेर्गुणश्च ३९८
मुहेर्धिक् ३६९
मुहेर्मूर्च २११
मूकादयः ११६
मूषिकसिमकौ ७७
मृकणिभ्यामीचिः १७०
मृगृवाह २२१
मृग्रोरुतिः ३०

मृडस्त्यः ३४३
मृदिकरिभ्यां २८७
यजेरुसिः ३०९
यजेः शिश्च २५४
यतेश्च ९८
यसिपनिभ्यां कः २९४
युजिरुचि ५७
युष्यसिभ्यां ५२
योरागुः १९४
रज्जुतर्कु ९
रमिकासि ६८
राते रिफः ३५४
रातेर्डैः ८५
रातेर्ङिः १७१
राला साला ११२
रुचिभुजि २२५
रुहिहृश्याभ्यः २२०
रुहेर्वृद्धिश्च २१
रौते रुक् २८८
लक्षेर्मोऽन्तश्च १६२
लिशेः सक् ३५५
वचिप्रच्छि ८१
वचेरालाटौ ३५९
वचेर्मिनिञ् २७५
वदेरान्यः २७४
वनिस्तस्य घः ३९०
वन्देरुरछादेशश्च ३७३
वरण्डादयः ३८
वलिमलि ३४८
वसेरिष्ठः ३८६
वसेः कनसिः २४९
वहलादिभ्यः १८६
वहिरहि ३
वहिवस्य २०५
वाचः सोऽन्तश्च २५६
वातप्रमीः १६३
विटपादयः १४८
वित्र्योः ष्यतेर्डतिडतौ ३०३
विपतिभ्यां १५४
विशेः कानः २८०
वृजिनाजिनेरिण ८०
वृञ एण्यः १२८
दृतुवदिहनिमवि २४७
वृतेस्तिकः १४९
वृश्चिकृषिभ्यां ७६
वृषलादयः ४१
वृषितक्षिराजिधन्वि ६१
वे[ञो डिः] २०१
वेतसवाहस १३८
वौ धाञश्च २६६
व्रश्चेः २३८
व्रियो हिः २७८
शकादिभ्योऽटः १८४
शकिशमिवहि ४०
शङ्केरुल्युन्तौ ११७
शमिकमिभ्यां ३२६

| | | | |
|---|---|---|---|
| शमेर्डतः | ३०६ | सर्तेरयूः | ९० |
| शमेर्डः | ३६ | सर्तेर्गोऽन्तश्च | २८४ |
| शमेर्डः | २१७ | सर्तेर्वः | १८८ |
| शमेः खः | २१० | सर्वधातुभ्यः | २३३ |
| शर्वजिह्वाग्रीवा | ६० | सर्वधातुभ्यो मन् | २२२ |
| शलिमण्डि | २५ | सर्वधातुभ्योऽसुन् | २५० |
| शविकमिभ्यां | १९० | सहेरसम् | ३०५ |
| शिखा | २१२ | सहेरुरिः | ३१९ |
| शिङ्घेराणकः | १२२ | सहेः षष् | २६९ |
| शिरीषादयः | १७४ | सारेरङ्गः | ४७ |
| शीङः | २५८ | सारेरथिः | १५६ |
| शीङो | ९१ | सावमेरिन् | ३९९ |
| शीङो वालवलञौ | ४५ | सावशेरासौ | १९ |
| शुद्रादयः | ७५ | सितनिगमि | २६ |
| शृङ्गभृङ्गाङ्गानि | ४८ | सिनोतेर्नः | ३६४ |
| शृणातेरावः | ३४९ | सिनोतेर्मोऽन्तो | २९२ |
| शृणातेः करः | २२८ | सिर्मनन्तश्च | २३६ |
| शृवसिवपिराजि | १९९ | सुखेः को मुखिश्च | ३९६ |
| शृदृभ्यामदिः | ५० | सुसूधाञ्गृधिश्विति | ७३ |
| श्याहृञवहृदक्षिभ्यः | ७९ | सूचेः स्मः | २१८ |
| श्रुवः चिक् | २३९ | सूविषिभ्यां | ६६ |
| श्लिषेरितोऽच्च | २६३ | सृणातेः | २९७ |
| सख्यादयः | २०३ | सृणिवेणिवृष्णि | १७८ |
| सचेः लिलश्च | ३७० | सृपिकपिलिभ्यः | २७१ |
| सञ्ज्यसिभ्यां | १५५ | स्तनिहृषि | २९ |
| सन्ध्यादयः | २२४ | स्तृणातेष्टत् | २३० |
| सपेस्तिततितनः | ३०२ | स्पृहेराय्यः | १२७ |
| सर्तेरपण्णोऽन्तश्च | १४७ | स्फायितञ्चि | ७२ |

स्यदेः [स्यन्देः] ७
स्नुरिम्भ्यां २५७
स्वस्रादयः १००
स्वमृभ्यां गः ३२४
हतेरूषः १८२
हनेर्जघश्च ९५
हकुञ्भ्यामेणुः ६४
हृषाहीतकन्‌ ३६३
ह्वो दोऽन्तश्च ८४
ह्वो म्यः ३३१
हस्रतडिरुहि ३५
हो द्वे च २०७
हो हिरश्च १३०
हसेर्वः ३२१
ह्रीकृशिभ्यां १९६

# INDEX OF WORDS


अक्षरम् IV-33.
अक्षः IV-53.
अक्षि VI-57.
अग्निः III-50.
अग्रम् VI-34.
अङ्कुरः I-17.
अङ्कुशः IV-52
अङ्गम् I-48.
अङ्गारः III-19.
अङ्गिराः IV-58.
अङ्गुलः VI-48.
अङ्गुलिः III-30
अङ्घ्रिः V-32.
अजिनम् II-22.
अजिरम् I-24.
अञ्जलिः III-42.
अड्डुः * I-34.
अणुः I-6.
अतसी III-10.
अतिथिः III-30.
अत्रिः VI-27.
अद्भुतम् IV-25.
अद्रिः III-53.
अधमः I-56.
अध्वा VI-59.
अनेहा IV-58.
अन्तः IV-27.
अन्धुः V-56.
अपत्यम् VI-30.
अपष्ठुः I-15.
अपः VI-42.
अप्सरसः IV-58.
अब्दः * III-64.
अभीषुः V-1.
अमतिः IV-11.
अमत्रम् III-5.
अमत्रम् * IV-39.
अम्बरीषः * III-47.
अम्बु V-35.
अम्भः IV-66.
अयः * IV-56.
अरणिः II-43.
अरण्यम् III-2.
अरत्निः III-41.
अरुणः II-60.
अरुः II-46.
अर्कः II-57.
अर्चिः II-44.
अर्जुनः II-60.
अर्थः V-64.
अर्भकः * II-58.
अर्मः I-53.
अर्यमा * II-5.
अलाबूः * I-34.
अवटः * III-57.
अवनिः II-43.
अवभृथः II-11.
अविनः II-21.
अविषः I-20.
अविः * III-14.


* Words marked with asterisk are found only in the commentary.

कुञ्जरः * III-19.
कुटपः * III-21.
कुटिलः V-53.
कुटीरम् VI-2.
कुट्टिमम् VI-15.
कुड्मलम् IV-43.
कुणपः * III-121.
कुणालः I-44.
कुण्डलम् VI-19.
कुण्डम् * I-37.
कुन्दः III-64.
कुमार्युः * I-15.
कुरकः VI-40.
कुरङ्गः V-23.
कुररः III-18.
कुरुः I-11.
कुर्विः III-37.
कुलटा V-47.
कुलिशम् VI-21.
कुशलम् VI-1.
कुशाः IV-51.
कुष्ठम् II-10.
कूपः * II-56.
कृकवाकुः I-4.
कृत्तिकाः III-23.
कृत्स्नम् IV-68.
कृपणः V-17.
कृपाणः V-17.
कृपीटः IV-22.
कृशानुः IV-2.
कृषिकः II-18.
कृषिः * III-15.
कृष्णः II-51.
कृसरा II-62.
केतुः I-28.
केवलः * I-41.
कोकिलः VI-46.
कोष्ठः V-63.
क्रतुः * I-28.
क्रयिकः II-20.
क्रूरः V-58.
क्रोष्टा I-26.
क्लेदा * II-5.
क्षत्ता * II-42.
क्षिपकः IV-12.
क्षिप्रम् II-14.
क्षुद्रः II-14.
क्षेमः I-53.
खञ्जकः III-39.
खट्वा II-1.
खड्गः V-52.
खण्डम् * I-37.
खदिरः * I-24.
खर्जूरः III-60.
खर्जूः I-31.
खलतिकः VI-29.
खलिनम् VI-7.
खलीनम् VI-7.
गङ्गा IV-19.
गच्छः V-18.
गण्डन्तः III-16.
गण्डूषम् * III-56.
गदयित्नुः I-29.
गन्तुः I-26.
गभीरः III-49.
गमी IV-47.
गम्भीरः III-49.
गरुत् I-30.
गर्गः I-49.
गर्तः IV-27

| | | | |
|---|---|---|---|
| गर्दभः | III-12. | चन्द्रः | II-14. |
| गर्भः | III-25. | चमसम् | III-10. |
| गह्वरम् * | II-50. | चमूः | I-31. |
| गाथा | V-64. | चरमः | V-27. |
| गिरिः | III-15. | चरुः | I-5. |
| गिर्विः | III-37. | चषालः | I-46. |
| गुथम् | II-10. | चाटुः | I-1. |
| गुरुः | I-11. | चारु | I-1. |
| गृध्नुः | I-10. | चित्रम् | IV-40. |
| गृध्रः | II-15. | चीवरम् * | II-50. |
| गोमयम् | VI-18. | चूर्णिः | III-51. |
| गोमायुः * | I-1. | चेतः * | IV-56. |
| गौरः * | II-17. | छत्वरः * | II-50. |
| गौः | II-28. | छदिः | II-44. |
| ग्रहणिः | II-43. | छन्दः | IV-65. |
| ग्रामः | I-54. | छर्दिः | II-44. |
| ग्रीवा | II-2. | छव्यः | III-38. |
| ग्रीष्मः | I-56. | छात्रः | VI-42. |
| घर्मः | I-56. | छाया | IV-29. |
| घातिः | IV-5. | छित्वरः | II-50. |
| घृणिः * | III-15. | छिद्रम् | II-15. |
| घृतम् | II-67. | जघनम् | II-37. |
| घोरम् | IV-38. | जङ्घा | IV-20. |
| चकोरः | IV-37. | जटा | III-58. |
| चक्रः | VI-4. | जटायुः * | I-15. |
| चक्षुः | II-46. | जटालिः | VI-22. |
| चटकः | VI-50. | जटिलः | V-53. |
| चटुः | VI-50. | जतु | I-8. |
| चण्डालः | I-43. | जत्रु | III-66. |
| चतुरः | I-17. | जनिः | IV-6. |
| चत्वरम् | II-48. | जनुः | II-46. |
| चत्वारः | IV-46. | जन्तुः | I-27. |
| चनकः | VI-49. | जन्युः | IV-1. |
| चन्दिरः | I-23. | जम्बूः * | I-34. |
| चन्द्रमाः | IV-57. | जयन्तः | III-17. |

जरायुः I-2.
जरूथम् III-9.
जर्जरिका * II-66.
जर्तः II-68.
जहकः IV-13.
जह्नुः * II-9.
जागृविः III-37.
जातुः I-1.
जामाता * II-42.
जाया * IV-30.
जायुः I-1.
जाल्मः VI-61.
जिनः II-52.
जिह्वा II-2.
जीरः II-16.
जीवातुः * I-28.
जूः II-23.
ज्योतिः II-45.
तक्रम् II-14.
तक्षा II-3.
तडित् I-35.
तण्डुलः I-46.
तनयः II-25.
तनुः I-5.
तनुः II-46.
तनूः I-31.
तन्तुः I-26.
तन्त्री III-34.
तपः * IV-56.
तमालः V-19.
तरङ्गः V-22.
तरणिः II-43.
तरिः III-34.
तरीषः III-46.
तरुणः II-60.
तरुः I-5.
तर्कु I-9.
तर्कुः I-32.
तर्षः IV-53.
तल्पम् * II-56.
तस्करः VI-3.
तातः II-68.
ताम्बूलम् VI-9.
ताम्रम् II-16.
तालुः I-3
तिग्मम् I-57.
तिन्तिडिका II-66.
तिमिरम् I-23.
तिरः V-8.
तिरीटम् IV-22.
तीक्ष्णम् IV-70.
तीर्थम् II-10.
तुहिनम् II-22.
तृप्रः II-15.
तृष्णा V-25.
त्यः V-49.
त्रपु I-6.
त्रयः V-32.
त्रिंशत् V-39.
त्वष्टा * II-42.
त्सरुः I-5.
दक्षिणः II-21.
दण्डः * I-37.
दद्रुः I-33.
दन्तः IV-27.
दभ्रम् II-15.
दमकः IV-12.
दरत् I-50.
दरिः * III-14.
दर्दुरः I-18.

| | | | |
|---|---|---|---|
| दर्भः | III-25. | धनुः * | I-15. |
| दर्विः * | III-39. | धनुः | II-46. |
| दलपः * | III-21. | धनूः | I-31. |
| दल्मिः | III-31. | धन्वा | II-3. |
| दश | V-3. | धमनिः | II-43. |
| दस्युः | IV-1. | धरणी | II-43. |
| दाकः | II-57. | धर्मः | I-53. |
| दानुः | II-7. | धाकः | II-57. |
| दारुणः | II-60. | धातुः | I-26. |
| दारुः | I-1. | धाना | II-53. |
| दिधिषूः * | I-34. | धिषणा | II-36. |
| दिनम् | VI-37. | धिष्ण्यम् | VI-60. |
| दिवसः | III-11. | धीरः | II-15. |
| दीदिविः * | II--39. | धीवरः * | II-50. |
| दीधितिः | VI-26. | धूमः | I-55. |
| दीपिः * | III-15. | धूसरः | II-62. |
| दीर्घः | VI-8. | धृषुः | I-10. |
| दुघुः * | I-15. | घृष्णिः | III-52. |
| दुहिता * | II-42. | धेनुः | II-9. |
| दूतः | II-67. | ध्रुवकः | IV-12. |
| दूरम् | VI-5. | ध्वनिः * | III-14. |
| *दूषीका* | *III-45.* | *ध्वाङ्क्षः* | *VI-25.* |
| *दृतिः* | *IV-10.* | *नक्षत्रम्* | *III-5.* |
| *दृषत्* | *I-51.* | *ननान्दा* | *II-39.* |
| देवयुः * | I-15. | नन्दन्तः | III-17. |
| देवलः * | I-41. | नप्ता * | II-42. |
| देवा | II-38. | नलिनम् | VI-6. |
| दोषा * | II-5. | नव | V-37. |
| दोः | II-32. | नवतिः | V-37. |
| द्यौः | VI-53. | ना | II-41. |
| द्रविणम् | II-21. | नाकुः | I-8. |
| द्रुहिणः | VI-6. | नाभिः | IV-5. |
| द्रुः | II-23. | नाम | VI-45. |
| द्रोणः | II-53. | निधानम् | II-35. |
| द्वौ | VI-44. | निम्बः | III-62. |

| | | | |
|---|---|---|---|
| निशीथः | II-21. | पललम् * | II-41. |
| निषद्वरः | II-49. | पलालम् | V-I9. |
| नीपः | II-56. | पलाशः | V-21. |
| नीवरः | II-50. | पलितम् | II-68. |
| नीविः | IV-8. | पशुः * | I-15. |
| नृभूः * | I-34. | पाकः | II-57. |
| नेमः | I-53. | पाटलिः | VI-22. |
| नेमिः | III-31. | पाणिः | IV-6. |
| नेष्टा * | II-42. | पातकम् | VI-34. |
| नौः | II-29. | पातालम् | I-43. |
| न्यङ्कुः | I-14. | पात्रम् * | IV-39. |
| पङ्कः | V-30. | पात्री * | IV-39. |
| पञ्च | V-43. | पाथः | II-10. |
| पञ्चालः | V-13. | पादूः * | I-34. |
| पटलम् | VI-1. | पापम् | II-55. |
| पट्टः | I-6. | पापिण्डः * | I-38. |
| पटोलः | V-54. | पायुः | I-1. |
| पणवः | V-26. | पार्ष्णिः | III-51. |
| पतङ्गः | V-22. | पांशुः | I-3. |
| पताका * | III-40. | पिचण्डम् * | I-38. |
| पतिः | III-52. | पिञ्जूरः | III-60. |
| पत्तनम् | III-27. | पिता * | II-42. |
| पत्नी | V-61. | पियालः | I-44. |
| पत्रम् | VI-4. | पिशुनः | II-61. |
| पद्मम् | I-53. | पीतुः * | I-28. |
| पन्थाः * | III-14. | पीयूषम् * | III-56. |
| पयः * | IV-56. | पीवरः * | II-50. |
| परमेष्ठी | IV-50. | पुण्यम् | III-4. |
| परशुः | I-16. | पुत्रः | IV-41. |
| परिव्राट् | II-24. | पुमान् | IV-42. |
| परुः | II-46. | पुरीषम् | III-47. |
| पर्जन्यः | III-4. | पुरुषः | III-54. |
| पर्णम् | II-35. | पुरुः | I-10. |
| पर्परिका * | II-66. | पुरोधाः | IV-56. |
| पलकम् | I-46. | पुलिनम् | IV-6. |

| | | | |
|---|---|---|---|
| पुष्करम् | IV-35. | भद्रम् * | II-17. |
| पुष्कलम् * | IV-35. | भयानकः | II-63. |
| पूषा | II-5. | भरतः | III-6. |
| पृतु | I-9. | भरुः | I-5. |
| पृथुकः | II-58. | भर्गः | V-60. |
| पृषतः | III-7. | भल्लूकः | I-25. |
| पृष्ठम् | II-13. | भस्त्री * | IV-39. |
| पेचः | III-65. | भस्म | IV-28. |
| पोतः | IV-27. | भानुः | II-6. |
| पोता * | II-42. | भामः | I-53. |
| पोषयित्नुः | I-29. | भावी | IV-49. |
| प्रथमः | V-59. | भासन्तः | III-17. |
| प्रदिवा | II-3. | भित्तिका | III-23. |
| प्रशास्ता * | II-42. | भिदुः | I-10. |
| प्रहिः | IV-9. | भीमः | I-58. |
| प्रियङ्गुः | V-12. | भीष्मः | I-58. |
| प्रोथः | II-13. | भुजिष्यः | IV-31. |
| प्लीहा * | II-5. | भुज्युः | II-34. |
| फनसः | III-11. | भुवनम् | VI-14. |
| फलकः * | IV-15. | भूकम् * | II-58. |
| फल्गु | I-9. | भूमिः | III-32. |
| फाल्गुनः | II-61. | भूरि | III-53. |
| बधिरः | I-23. | भृगुः | I-13. |
| बन्धुः | I-6. | भृङ्गः | I-48. |
| बर्बरः | II-48. | भृङ्गारः * | III-19. |
| बर्हिः * | II-45. | भृशम् | IV-52. |
| बलाका | III-40. | भेकः | II-57. |
| बलिनः | VI-6. | भेरी * | II-17. |
| बलिः * | III-14. | भ्राता * | II-42. |
| बहु | I-6. | भ्रूः | II-30. |
| बाष्पः * | II-56. | मकुटः | VI-64. |
| बाहुः | I-3. | मगधः | VI-52. |
| बिम्बम् | III-62. | मघवा | V-4. |
| ब्रध्नः | II-52. | मघा | VI-66. |
| ब्रह्मा | V-6. | मङ्कुरः | I-18. |

| | | | |
|---|---|---|---|
| मङ्गलम् | VI-19. | मर्तः | IV-27. |
| मज्जा * | II-5. | मर्त्यः | VI-12. |
| मञ्जूषा | III-56. | मलयः | VI-17. |
| मण्डयन्तः | III-16. | मलिनः | VI-6. |
| मण्डलम् | VI-19. | मसूरः | III-60. |
| मण्डम् * | I-37. | मस्तु | I-26. |
| मण्डूकः | I-25. | महिनम् | II-22. |
| मत्सरः | IV-33. | महिषः | I-20. |
| मत्स्यः | IV-32. | मातरिश्वा * | II-5. |
| मथुरा | I-17. | माता * | II-42. |
| मदयित्नुः | I-29. | मात्रा * | IV-39. |
| मदारः | III-19. | मानुषः | VI-11. |
| मदिरा | I-23. | माया | IV-29. |
| मद्गुः | I-5. | मायुः | I-1. |
| मद्रः | II-14. | मार्जारः | III-19. |
| मधुः | I-8. | माला | I-46. |
| मनः * | IV-56. | मासः | V-65. |
| मनुष्यः | VI-10. | मांसम् | IV-53. |
| मनुः | I-6. | मांसम् | V-66. |
| मन्तुः | I-27. | मितद्रुः * | I-15. |
| मन्था * | III-14. | मित्रम् | IV-40. |
| मन्दः * | III-64. | मिथुनम् | V-9. |
| मन्दारः | III-19. | मुखम् | VI-65. |
| मन्दिरम् | I-23. | मुग्धा | VI-38. |
| मन्दुरा | I-17. | मुण्डः * | I-37. |
| मन्द्रः | II-14. | मुद्गः | I-49. |
| मन्युः | IV-1. | मुद्रा | II-15. |
| मयुः * | I-15. | मुनिः | IV-3. |
| मयूखः | VI-47. | मुशलम् | VI-1. |
| मयूरः | VI-47. | मुहुः | V-46. |
| मरकः * | IV-15. | मुहूर्तम् | V-46. |
| मरीचिः | III-43. | मूकः | II-58. |
| मरुत् | I-30. | मूर्खः | IV-17. |
| मरुः | I-5. | मूर्वा * | II-5. |
| मर्कटः | III-58. | मूर्धा | V-36. |

मूषिकः II-19.
मृगयुः * I-15.
मृणालम् V-19.
मृत्युः II-34.
मृदङ्गः V-23.
मृदु I-10.
मृत्तिका * II-66.
मेरुः III-65.
मोघः VI-67.
यजुः V-45.
यमुना II-60.
यवसः III-10.
यवागूः III-67.
यशः IV-60.
यस्कः V-60.
यः V-49.
याता II-40.
यामः I-53.
युग्मम् I-57.
युध्मम् I-55.
युवा II-3.
युष्मत् I-52.
यूका * II-58.
यूथम् II-13.
यूपः * II-56.
यूषा * II-5.
योनिः III-50.
योषित् I-35.
रजतम् III-7.
रजः IV-59.
रज्जुः I-9.
रण्डा * I-37.
रदूः * I-34.
रथः II-10.
रभसः III-10.
रविः * III-14.
रश्मिः III-32.
रहः * IV-56.
राकः II-57.
राका * II-57.
राजा II-3.
राजिः IV-5.
रात्रिः III-44.
राशिः IV-6.
रासभः III-12.
रास्ना II-54.
राहुः I-3.
राः II-27.
रिक्थम् II-10.
रिपुः I-9.
रुक्मम् I-57.
रुचिरम् I-23.
रुचिष्यः IV-31.
रुचिः * III-15.
रुद्रः II-14.
रुधिरम् I-23.
रुरुः V-24.
रेणुः II-7.
रेतः IV-63.
रेफः VI-23.
रोचिः II-44.
रोहित् I-35.
रोहित् IV-26.
रौहिषम् I-21.
लक्ष्मीः III-35.
लघुः I-9.
लकुचकः IV-12.
लट्वा II-1.
लत्तिका III-23.
ललाटम् V-7.

लाङ्गूलम् III-60.
लिक्षा VI-24.
लेखकः IV-12.
लोतः IV-27.
लोत्रम् III-59.
लोष्टः II-68.
लोहितम् * IV-26.
वक्रम् II-14.
वक्षः IV-62.
वग्नुः * II-9.
वज्रम् II-17.
वटकः VI-50.
वटुः VI-50.
वण्डः * I-37.
वत्सरः IV-33.
वत्सः * IV-53.
वदान्यः V-10.
वधूः I-31.
वन्ध्या * IV-30.
वपुः II-46.
वप्रम् VI-4.
वयः * IV-56.
वरण्डः I-38.
वरुणः II-60.
वरूथम् III-9.
वरेण्यम् III-1.
वर्णः II-35.
वर्णुः II-7.
वर्तनिः II-43.
वर्तिका III-22.
वर्त्म * IV-28.
वर्षम् IV-53.
वलभिः III-12.
वलयम् VI-17.
वलिः * III-14.
वल्गु I-9.
वल्लभः III-12.
वसतिः IV-11.
वसन्तः III-17.
वसिष्ठः VI-55.
वसु I-5.
वस्तिः IV-10.
वस्तु I-27.
वस्नम् II-53.
वहतिः IV-11.
वहतुः * I-28.
वहत्रम् III-59.
वहन्तः III-17.
वहलम् I-40.
वह्निः III-50.
वंशः IV-52.
वाक् II-23.
वाग्मी V-11.
वाचाटः VI-28.
वाचालः VI-28.
वातप्रमीः III-36.
वातः IV-27.
वापी IV-5.
वायुः I-1.
वारि IV-5.
वासरः II-62.
वासरः IV-33.
वासिः IV-5.
वासुरा I-17.
वास्तु * I-27.
वाहसः III-11.
विटपः III-21.
विधुरः I-18.
विधुः V-2.
विपिनम् II-22.

विप्रः * II-17.
विभ्वम् II-1.
विषाणम् V-16.
विष्णुः II-8.
विंशतिः V-39.
विः IV-7.
वीणा II-54.
वृकः * II-58.
वृक्षः IV-44.
वृजिनम् II-22.
वृत्रः II-15.
वृन्दः * III-64.
वृश्चिकः II-18.
वृषभः III-13.
वृषलः I-41.
वृषा II-3.
वृष्णिः III-51.
वेणिः III-51.
वेणुः II-9.
वेतना III-27.
वेतसः III-11.
वेत्रम् * IV-39.
वेधा * IV-56.
वेशान्तः III-17.
व्रीहिः V-14.
शकटः III-57.
शकलम् I-40.
शकुनिः II-59.
शकुन्तः II-59.
शक्रः II-14.
शङ्कुः * I-15
शङ्खः IV-16.
शण्डः IV-23.
शण्ढः I-36.
शतद्रुः I-15.
शतम् V-42.
शत्रुः * III-66.
शब्दग्राट् II-23.
शब्दः III-63.
शमलम् I-40.
शम्बलम् V-62.
शयानकः II-63.
शयुः I-5.
शरत् I-50.
शरभः III-12.
शरावः VI-18.
शरीरम् III-48.
शर्करा IV-34.
शर्वरः II-48.
शर्वरी * II-48.
शर्वः II-2.
शलभः III-12.
शलाका * III-40.
शल्कः II-57.
शष्पम् * II-56.
शारिः IV-5.
शालूकम् I-25.
शिखण्डः * I-38.
शिखा IV-18.
शिग्रुः * III-66.
शिङ्घाणकः II-64.
शिथिलः I-46.
शिबिरम् * I-24.
शिरः IV 59.
शिरीषः III-47.
शिशिरः * I-24.
शिशुः I-9.
शीधुः II-33.
शुक्रः VI-4.
शुक्लः I-46.

शुभ्रम् II-15.
शुल्बम् * III-62.
शुषिरम् I-23.
शूद्रः II-17.
शृङ्गम् I-48.
शृङ्गारः III-19.
शेफः IV-64.
शेवालम् I-45.
शैवलम् I-45.
शोचिः II-44.
शौण्डीरः III-48.
श्मश्रु * III-66.
श्यामा I-55.
श्यामाकः * III-40.
श्येतः IV-26.
श्येनः II-21.
श्रण्डः * I-37.
श्रीः II-23.
श्रूः II-23.
श्रोणिः III-50.
श्लक्ष्णम् IV-69.
श्वा * II-5.
श्वित्रम् II-15.
षट् V-5.
षण्डः * I-37.
सक्तुः I-26.
सक्थि III-28.
सखि IV-9.
सन्ध्या IV-30.
सप्ततिः V-38.
सप्तिः V-38.
सरकः * IV-15.
सरटः * III-57.
सरणिः II-43.
सरयूः II-32.
सरित् I-35.
सर्जूः I-31.
सर्पिः II-44.
सर्वम् III-61.
सर्षपः III-20.
सलिलम् VI-39.
सस्यम् IV-29.
सहस्रम् V-41.
सहुरिः V-55.
संवत्सरः * IV-33.
सः V-49.
साधन्तः III-17.
साधुः I-1.
सानुः I-1.
साम VI-45.
सारङ्गः I-47.
सारथिः III-29.
सास्ना II-54.
सिक्थम् II-10.
सितः II-67.
सिन्धुः I-7.
सिमिकः II-19.
सिंहः V-28.
सीता V-29.
सीमा I-56.
सुमेरुः * III-65.
सुरतम् II-68.
सुरा II-15.
सुण्डुः * I-15.
सूक्ष्मम् IV-24.
सूनुः II-8.
सूपः * II-56.
सूरः II-15.
सूरिः III-53.
सूर्पः V-33.

सृकम् * II-58.
सृगालः V-20.
सृणिः III-51.
सृपाटः V-7.
सेतुः I-26.
सेना VI-36.
सोमः I-53.
स्तनयित्नुः I-29.
स्तरी III-34.
स्तोमः I-53.
स्त्री IV-36.
स्थविः * III-39.
स्थाणुः * II-9.
स्थायी IV-49.
स्थिरः * I-24.
स्थूणा II-54.
स्नेहा * II-5.
स्पृहयाय्यम् II-69.
स्फारम् II-14.
स्रुक् IV-45.
स्रोतः IV-63.
स्वर्गः V-60.
स्वशुरः I-19.
स्वसा II-42.
स्वादु I-1.
स्वामी VI-68.
हनुः I-6.
हनूषः III-55.
हरिणः II-21.
हरित् I-35.
हरितः IV-26.
हरिद्रुः * I-15.
हरिः * III-14.
हरीतकी VI-32.
हरेणुः II-6.
हर्म्यम् V-68.
हर्षयित्नुः I-29.
हविः II-44.
हस्तः IV-27.
हंसः IV-53.
हिमम् I-55.
हिरण्यम् III-3.
हृदयम् II-26.
हेतुः I-27.
हेमन्तः III-17.
होता * II-42.
होमः I-53.
ह्रस्वः V-57.
ह्रीकुः IV-2.

# CORRIGENDA

| PAGE | LINE | FOR | READ |
|---|---|---|---|
| 9 | 1 | कच्छ्रूदयः | कच्छ्वादयः |
| 10 | 6 | शिखण्ड- | करण्ड- |
| | | करण्ड | शिखण्ड |
| 14 | 19 | तत्पुरुषे | तत्पुरुषे |
| 17 | 8 | मुदि | मदि |
| 38 | 14 | भूरिः | भूरि |
| 48 | 14 | ३४० | २४० |
| 56 | 10 | नृपनि | नृपति |
| 63 | 11 | पतिवपिष्णु | पतिवपिष्णु |
| 71 | 9 | दः | धः |
| | 10 | दश्च | धश्च |